# मालतीमाधवं

नाम

प्रकरणम्।

---

महाकविश्रीभवभूतिविरचितम्।

जगद्धरकृतां टीकामवलम्ब्य

बि, ए, उपाधिधारिणा पण्डितकुलपतिना

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

विरचितया व्याख्यया समलङ्कृतम्।

द्वितीयसंस्करणम्।

सिद्धेश्वर यन्त्रे मुद्रितम्।

---


१८८४।

প্রকাশক—শ্রীজীবানন্দবিদ্যাসাগর বি, এ,

২ নং রমানাথ মজুমদারের ষ্ট্রীট, কলিকাতা।

প্রিণ্টর—শ্রীসিদ্ধেশ্বর পান

৩৮ নং শিবনারায়ণ দাসের লেন

কলিকাতা।



पण्डितकुलपतिः

श्रीजीवानन्दविद्यासागर वि, ए.

PANDIT JIBANANDA VIDYASAGARA B. A.

Superintendent Free Sanskrit College, Calcutta

# मालतीमाधवं

## नाम

## प्रकरणम् ।

सानन्दं नन्दिहस्ताहतमुरजरवाहूतकौमारबर्हि-
त्रासान्नासाग्ररन्ध्रं विशति फणिपतौ भोगसङ्कोचभाजि ।
गण्डोड्डीनालिमालामुखरितककुभस्ताण्डवे शूलपाणे-
र्वैनायक्यश्चिरं वो वदनविधुतयः पान्तु चीत्कारवत्यः ॥ (१)

अपि च । चूडापीडकपालसङ्कुलगलन्मन्दाकिनीवारयो

---

(१) इह खलु कविः मालतीमाधवं नाम प्रकरणमुद्दिश्य वस्तुनिर्देशोपक्षान्तं कर्तुमिच्छन्, कर्त्तव्यतया नाट्यवस्तुनः पूर्वं नान्दीं निर्दिशति सानन्दमित्यादि । प्रकरणत्वं लौकिकवृत्तत्वेन कविकल्पितत्वेन अमात्यनायकत्वेन च प्रकरणमित्यस्मिन् तथा चोक्तं दर्पणे । भवेत् प्रकरणं वृत्तं लौकिकं कविकल्पितम् । शृङ्गारोऽङ्गी नायकस्तु विप्रोऽमात्योऽथवा वणिक् । सापायधर्मकामार्थपरो धीरप्रशान्तक इति । शूलपाणेः शिवस्य ताण्डवे नृत्ये नन्दिहस्तेन आहतः ताडितः यो मुरजः तस्य रवेण आहूतस्य कौमारबर्हिणः कार्त्तिकेयमयूरस्य त्रासात् भोगस्य फणायाः शरीरस्य वा यः सङ्कोचः प्रसारणं तं भजते इति तस्मिन् सर्पाणां फणिपतौ सर्पराजे नासाग्ररन्ध्रं नासिकाग्रविवरं सानन्दं यथा तथा विशति सति । अत्र नासारन्ध्रविशनेनैव अविरतोत्क्षेपणं क्रीडति प्रवेशनेन तस्य दर्पमूषणाय प्रवेशस्य प्रायश्चित्तकतया सानन्दमिति विशेषणं नानुपपन्नम् । गण्डयोः उड्डीनाभिः अलिमालाभिः मधुपश्रेणीभिः मुखरिताः सशब्दीकृताः ककुभो दिशो याभिस्ताः चीत्काराः चीत्कारोऽस्त्युत्कटः शब्दः तद्विशिष्टा या वैनायक्यः विनायकसम्बन्धिन्यः वदनविधुतयः वो युष्मान् चिरं पान्तु विधुतीनामचेतनत्वेऽपि रक्षाकर्तृत्वं देवसम्बन्धित्वेनोपचारात् ।

विद्युत्प्रायललाटलोचनपुटज्योतिर्विमिश्रत्विषः ।
पान्तु त्वामकठोरकेतकशिखासन्दिग्धमुग्धेन्दवो
भूतेशस्य भुजङ्गवल्लिवलयस्रङ्नद्धजूटा जटाः ॥ ( २ )

अपि च। पश्चाल्लीपिङ्गलिम्नः कण इव तडितां यस्य कृत्स्नः समूहो
यस्मिन् ब्रह्माण्डभीमः प्रदिनिहितमुखे कालयज्वा जुहाव ।
अर्चिर्निष्टप्तचूडाशशिगलितसुधासारभृङ्गारिकोणम्
तार्त्तीयीकं पुरारेस्तदवतु मदनप्लोषणं लोचनं वः ॥ ( ३ )

[ नान्द्यन्ते सूत्रधारः । ( ४ ) ]

[ अलमतिविस्तरेण । पुरतोऽवलोक्य । ]

---

( २ ) चूडेति । चूडायां य आपीडः शिरोमाला तस्य कपालैः सङ्कुलं व्याप्तं गलत् पतत् मन्दाकिनीवारि यासु तास्तथोक्ताः । विद्युत्प्रायस्य सौदामिन्यास्य ललाटे लोचनपुटस्य भालाक्षिपुटस्य ज्योतिषा विमिश्रा त्विषो यासां ताः अतएव अकठोरासु कोमलासु केतकशिखासु केतकीकुसुमाग्रेषु सन्दिग्धो भ्रान्तिविषयो मुग्धः सुन्दर इन्दुर्यासु ताः, तथा भुजङ्गा एव वल्ली लतास्ता एव वलयाः स्रजः ताभिर्नद्धो बद्धो जूटः समूहो यासां ताः भूतेशस्य धूर्जटेर्जटास्त्वां पान्तु रक्षन्तु अत्राप्युपचाराध्याहारः ।

( ३ ) पश्चादिति । यस्य लोचनस्य पश्चाल्लीपिङ्गलिम्नः नेत्रस्य अग्नि-पिङ्गलस्य समूहस्तडितां कृत्स्नः कण इव, तथा कालयज्वा कालरूपो याजकः यस्मिन् लोचने ईषद्विनिघटितमुकुले किञ्चिदुन्मीलिते सति ब्रह्माण्डं जुहाव अर्चिभिः स्फुलिङ्गनिवहैः निष्टप्ता तापिता या चूडाशशी ललाटेन्दुस्तस्मात् गलितः स सुधासारः अमृतप्रवाहः भृङ्गारी भृङ्गायमाणः कोणः अपाङ्गदेशो यस्य भालि-नेत्रानलतो नेत्रापाङ्गदेश एव पतन सम्भवतीति भावः । तत् मदनप्लोषणं मदनदाहकं पुरारेः शिवस्य तार्त्तीयीकं तृतीयं लोचनं वो युष्मान् अवतु रक्षतु ।

( ४ ) नान्द्यन्त इति । नान्दीलक्षणं यथा आशीर्वचनसंयुक्ता स्तुतिर्यस्मात् प्रयुज्यते । देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता । इति दर्पणः । अत्र द्वादशपदा नान्दी । शङ्खाब्जचन्द्रकोककैरवशंसिनी । पदैर्युक्ता द्वादश-

अये! उदितभूयिष्ठ (५) एष भगवानशेषभुवनद्वीपदीप-कस्तपनस्तमुपतिष्ठे। [प्रणम्य]।

कल्याणानां त्वमसि महसां भाजनं विश्वमूर्त्ते!
धुर्य्यां लक्ष्मीमथ मयि भृशं धेहि देव! प्रसीद।
यद्यत्पापं प्रतिजहि जगन्नाथ! नमस्य तन्मे
भद्रं भद्रं वितर भगवन्! भूयसे मङ्गलाय॥ (६)

[नेपथ्याभिमुखमवलोक्य।] मारिष! सुविहितानि रङ्गमङ्गलानि सन्निपतितश्च (७) भगवतः कालप्रियनाथस्य यात्राप्रसङ्गेन नानादिगन्तवास्तव्यो (८) महाजनसमाजः। आदिष्टश्चास्मि विद्वज्जनपरिषदा, यथा, केनचिदपूर्वप्रकरणेन वयं विनोदयितव्या इति। तत्किमित्युदासते (९) भरताः।

---

भिरष्टाभिर्वा पदैरन्वितेति लक्षणात् मङ्गल्यचन्द्रयोः ग्रंसनात् मङ्गल्यवस्तुप्रतिपादिका नान्दी। नान्द्यन्ते सूत्रधारेण पूर्वरङ्गस्य कर्त्तव्यतया तन्निर्देशः।

(५) उदितभूयिष्ठः उदितं भूयिष्ठं बहुलं यस्य सः। किञ्चिदवशिष्ट-स्तूदयोऽस्य इति भावः।

(६) कल्याणेति हे विश्वमूर्ते! अखिलस्वरूप! त्वं कल्याणानां माङ्गलिकानां महसां तेजसां भाजनं आधारोऽसि। हे देव! धुर्य्यां महतीं लक्ष्मीं सम्पत्तिञ्च मयि भृशमतिशयेन धेहि प्रतिपादय त्वमित्यध्याहार्य्यम्। प्रसीद प्रसन्नो भव हे जगन्नाथ! नमस्य मे मम यद्यत् पापं विद्यते इति शेषः। तत् प्रतिजहि अपनोदय हे भगवन्! भूयसे प्रभूताय मङ्गलाय मङ्गलविधानं भद्रं कल्याणजनकं भद्रमभीष्टं वितर समर्पय। अत्र सर्व्वाधनचतुष्टयानामुपादानं फलदानसामर्थ्यसूचनार्थमिति।

(७) सुविहितानि रङ्गमङ्गलानि रङ्गस्थलस्य मङ्गलानि कार्य्याणि सुसम्पादितानि, सन्निपतितः उपस्थितः। कालप्रियनाथस्य तदाख्यदेवभेदस्य।

(८) दिगन्तवास्तव्यः दिङ्मण्डलवासी।

(९) उदासते, उदासीनचित्ताः तिष्ठन्ति। भरताः नटाः।

[ प्रविश्य पारिपार्श्विकः ] ( १० )। भाव ! ( ११ ) परिषन्निर्दिष्टगुणं प्रबन्धं नाधिगच्छामः ।

सूत्र। मारिष ! कतमे ते गुणास्तत्र यानुदाहरन्त्यार्य्या विदग्धा मिश्रा भगवन्तो भूमिदेवाश्च ।

नटः ।

भूम्ना रसानां गहनाः प्रयोगाः सौहार्द्दहृद्यानि विचेष्टितानि।
औद्धत्यमायोजितकामसूत्रं चित्रा कथा वाचि विदग्धता च (१२)

सूत्र। स्मृतं तर्हि ।

नटः। भाव ! किमिव ?।

सूत्र। अस्ति दक्षिणापथे विदर्भेषु पद्मपुरं नाम नगरम्। तत्र केचित्तैत्तिरीयिणः काश्यपाश्चरणगुरवः पङ्क्तिपावनाः पञ्चाग्नयो धृतव्रताः सोमपीथिनो ब्राह्मणा ब्रह्मवादिनः (१३) प्रतिवसन्ति स्म ।

---

( १० ) पारिपार्श्विकलक्षणं यथा भारतीयनाट्यशास्त्रे। सूत्रधारस्य पार्श्वे यः प्रचरन् कुरुतेऽर्थनाम्। काव्यार्थसूचनालापैः स भवेत् पारिपार्श्विकः।

( ११ ) भाव ! विद्वन्। परिषदा दर्शकेन निर्दिष्टौ गुणौ य[illegible]म् !

( १२ ) भूम्ना रसानामिति। रसानां शृङ्गारादीनां भूमातिशयेन गहना दुष्प्रवेशा गम्भीरेति यावत् सौहार्द्देन मित्रता हृद्यानि हृद्गतानि विचेष्टितानि नायकनायिकयो रमणीयोपायविशेषाः, आयोजितकामसूत्रं कृतमदनलक्षणं औद्धत्यं नायकगुणप्रकर्षरूपं, चित्रा विस्मापयित्री कथा, वाचि विदग्धता च वाङ्नैपुण्यमेतानि यत्र सन्तीत्यर्थः। एवंविधं नाट्यं अभिनयितुं मादिशन्ति विद्वांस इति शेषः।

( १३ ) तैत्तिरीयिणः तैत्तिरीयशाखाध्यायिनः, तद्विद इत्यर्थः। काश्यपाः काश्यपगोत्रापत्यानि पङ्क्तिपावनाः सर्वश्रेष्ठास्तत्र पावनत्वमित्यर्थः। पञ्चाग्नयः [illegible]काः दक्षिणाग्नि गार्हपत्याहवनीय सभ्यावसथ्यरूपाग्नि पञ्चकोपासकाः। सोमपीथिनः सोमरसपायिनः ब्रह्मविदः वेदज्ञाः।

ते श्रोत्रियास्तत्त्वविनिश्चयाय भूरि श्रुतं शाश्वतमाद्रियन्ते ।
इष्टाय पूर्त्ताय च कर्म्मणेऽर्थान् दारानपत्याय, तपोऽर्थमायुः ॥
( १४ )

तदामुष्यायणस्य तत्रभवतः सुगृहीतनाम्नो भट्टगोपालस्य पौत्रः पवित्रकीर्त्तेर्नीलकण्ठस्यात्मसम्भवो भट्टश्रीकण्ठपदलाञ्छनो, भवभूतिनामा, जातूकर्णीपुत्रः, कविर्निसर्गसौहृदेन भरतेषु स्वकृतिमेवंप्रायगुणभूयसीमस्माकमर्पितवान् यत्र खल्वियं वाचो युक्तिः । (क)

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान् प्रति नैष यत्नः ।
उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्म्मा,
कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥ ( १५ )

---

(क) तदामुष्यायणस्य [illegible] । तत्रभवतः पूज्यस्य सुगृहीतनाम्नः पुण्यश्लोकस्य । श्रीः लक्ष्मीः कण्ठे यस्य सः श्रीकण्ठः तद्वाचकं पदं लाञ्छनं चिह्नं यस्य सः, नाम्ना श्रीकण्ठः इति भावः । भवभूतिः नामान्तरमेतत् । जातूकर्णीति [illegible] जातूकर्णी भवभूतिमाता तत्पुत्रः । भरतेषु नटेषु । वाचोयुक्तिः वचनरचनम् ।

---

(१४) त इति । ते श्रोत्रियाः ब्रह्मनिष्ठास्तत्त्वविनिश्चयाय, ब्रह्मज्ञानाय तत्त्व [illegible] परमार्थमिति भावः । शाश्वतं नित्यं श्रुतम् औपनिषदविद्यां भूरि [illegible] इष्टाय यागादिकाय पूर्त्ताय खातादिकाय च कर्मणे तदर्थमित्यर्थः । अर्थान् [illegible] तथा अपत्याय पुत्रार्थमेव दारान् भार्याः पुत्रार्थे क्रियते भार्या इति शासनात् । तपोऽर्थं तपस्यार्थे आयुर्जीवितमपि आद्रियन्ते आदरं कुर्वन्तीत्यर्थः ।

(१५) ये नामेति । ये जनाः केचित् इह प्रकरणाख्यरूपकविशेषे नोऽस्माकं कर्मणि ग्रन्थे [illegible] । अवज्ञामनादरम् [illegible] । जानन्तीति ते जनाः किमपि [illegible] रसास्वादनप्रकारं जानन्ति, सुतरां तान् प्रति एष [illegible] मम यत्नो

अपि च। यद्वेदाध्ययनं, तथोपनिषदां सांख्यस्य, योगस्य च ज्ञानं तत्कथनेन किं? न हि ततः कश्चिद्गुणो नाटके।

यत्प्रौढत्वमुदारता च वचसां यच्चार्थतो गौरवम्,
तच्चेदस्ति ततस्तदेव गमकं पाण्डित्यवैदग्ध्ययोः॥ (१६)

ततो, यदस्माकमर्पितं प्रियसुहृदाऽत्रभवता भवभूतिनाम्ना प्रकरणं स्वकृतं मालतीमाधवं नाम, तदेव तत्रभवतः कालप्रियनाथस्य पुरतः प्रयोगेण प्रख्यापयितुमुद्यताः तत्सर्वे कुशीलवाः सङ्गीतप्रयोगेण मत्समीहितसम्पादनाय प्रवर्त्तन्ताम्।

नटः। [स्मृत्वा।] एवं क्रियते युष्मदादेशः किन्तु या यस्य युज्यते भूमिका, तां खलु तथैव भावेन सर्वे वर्गाः पाठिताः, सौगतपारिव्राजिकायास्तु कामन्दक्याः प्रथमभूमिकां भाव एवाधीते, तदन्तेवासिन्यास्त्ववलोकितायाः।

सूत्र। ततः किम्।

---

न भवतीति शेषः। अथ यदि चेत् सर्वं तर्हि कथं यत्नस्त्वया क्रियत इत्याह उत्पत्स्यते इति। हि यतो मम समानधर्मा तुल्यगुणः कोऽपि जन इति शेषः। उत्पत्स्यते जनिष्यति यतः कालो निरवधिर्निःसीमा अस्ति, पृथ्वी च धरण्यपि विपुला सुविस्तृता अस्ति विद्यते। अत्र ये निन्दन्ति नाम्ना येऽप्यत्रास्ते हीना इत्यर्थापत्त्याऽर्थापत्तिरलङ्कारः।

(१६) यदिति। यद्वेदाध्ययनं तथा उपनिषदां शारीरकमीमांसाख्यानां सांख्यस्य कापिलीयस्य योगस्य पतञ्जलिप्रणीतस्य पातञ्जलस्य च ज्ञानं तत्कथनेन तयोः सांख्ययोगयोः कथनेन च किं? नहि नाटके ततः कश्चित् गुणोऽस्ति। किन्तु वचसां यत् प्रौढत्वं गाम्भीर्यभावः यद्वा प्रौढत्वं पदार्थे वाक्यरचनं वाक्यार्थे च पदरचनम्। प्रसादः सारल्यं उदारता अग्राम्यत्वं यच्च अर्थतः अर्थे गौरवं तच्च चेद् यदि विद्येत ततस्तर्हि तदेव हि पाण्डित्यवैदग्ध्ययोर्गुणनैपुण्ययोर्गमकं प्रतिपादकम्।

नटः। ततः प्रकरणनायकस्य मालतीवल्लभस्य माधवस्य वर्णिकापरिग्रहः कथम्?

सूत्र। मकरन्दकलहंसप्रवेशावसरे तत्सुविहितम्।

नटः। तर्हि तत्प्रथमप्रयोगादेवात्रभवतः सामाजिकानुपास्महे।

सूत्र। बाढं, एषोऽस्मि कामन्दकी संवृत्तः।

नटः। अहमप्यवलोकिता। [इति परिक्रम्य निष्क्रान्तौ।]

[प्रस्तावना। (१७)]

[ततः परिवृत्य रक्तपट्टिकानेपथ्ये कामन्दक्यवलोकिते प्रविशतः]

कामन्दकी। वत्से! अवलोकिते!

अवलोकिता। आणवेदु भअवदी।

काम। अपि नाम तयोः कल्याणिनोर्भूरिवसुदेवराताऽपत्ययोर्मालतीमाधवयोरभिमतः पाणिग्रहः स्यात्?। [वामाक्षिस्पन्दनं सूचयित्वा सहर्षम्।]

विवृण्वतेव कल्याणमात्मस्पन्देन चक्षुषा।
स्फुरता वामकेनापि दाक्षिण्यमवलम्ब्यते॥ (१८)

अव। महन्तो क्खु भअवदीए एसो चित्तविक्खेवो।

---

(१७) प्रस्तावनालक्षणमाह दर्पणकारः। चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः। आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा।

(१८) विवृण्वतेति। कल्याणं शुभं विवृण्वता कथयितु मारभमाणेनेवेत्युत्प्रेक्षा। आत्मस्पन्देन चक्षुषा हृदयवासिना वामकेन अदक्षिणेन अननुकूलेनापि स्फुरता सता दाक्षिण्यं प्रसन्नत्वं आनुकूल्यञ्च अवलम्ब्यते श्रियते।

अच्चरीअं, अच्चरीअं, जं दाणिं चीरचीवरपरिच्छदं पिण्डवाद-मेत्तपाणधारिणीं भअवदीं, ईदिसे आआसे, अमच्चभूरिवसू णिओएदि । तहिं उक्खण्डिदसंसारावग्गहो अप्पा तुम्हेहिं णिउञ्जीअदि (क)।

काम । वत्से ! मा मैवं ब्रूहि ।

यन्मां विधेयविषये स भवान्नियुङ्क्ते,
स्नेहस्य तत्फलमसौ प्रणयस्य सारः ।
प्राणैस्तपोभिरथवाभिमतं मदीयैः,
कृत्यं घटेत सुहृदो, यदि तत्कृतं स्यात् ॥ ( १८ )

अयि, किं न वेत्सि यदेकत्र नो विद्यापरिग्रहाय नानादिगन्तवासिनां साहचर्य्यमासीत्, तदैव चास्मत्सौदामिनी-समक्षमनयोर्भूरिवसुदेवरातयोर्वृत्तेयं प्रतिज्ञा, अवश्यमावाभ्यामपत्यसम्बन्धः कर्त्तव्य इति । तदिदानीं विदर्भराज-

( क ) महान् खलु भवत्या एव चित्तविक्षेपः । आश्चर्य्यमाश्चर्य्यं, यदिदानीं चीरचीवरपरिच्छदां पिण्डपातमात्रप्राणधारिणीं भगवतीं ईदृशे आयासे अमात्य-भूरिवसुर्नियोजयति । तदीनृत्खण्डितसंसारावग्रह आत्मा युष्माभिर्नियुज्यते । उत्-खण्डितः उच्छिन्नः संसाररूपः अवग्रहः बन्धः येन सः ।

( १८ ) यदिति । स भवान् पूज्यः भूरिवसुः मालतीपिता विधेयविषये कर्त्तव्यविषये यत् मां नियुङ्क्ते प्रेरयति तत् स्नेहस्य फलं, असौ प्रणयस्य सारः सारभावः तत्कार्यं नियोजनं वा अन्यथा कथं मां नियुङ्क्तेति भावः । मदीयैः प्राणैरथवा तपोभिः सुहृदः मित्रस्य अभिमतम् ईप्सितं कृत्यं कार्यं यदि घटेत निष्पद्येत तत् कृत्यं कार्यं कृतं सम्पादितं स्यात् प्राणादिभिरपि कार्यं सम्पादनीयम् इति अभ्यर्थनिष्कर्षः ।

( १० ) अपत्येति । अपत्यस्य कन्यायाः सम्बन्धविधेः प्रतिज्ञा प्रियस्य सुहृदः

मन्त्रिणा सता देवरातेन, माधवं पुत्रमान्वीक्षिकीश्रवणाय,
कुण्डिनपुरादिमां पद्मावतीं प्रहिण्वता सुविहितम्।
अपत्यसम्बन्धविधिप्रतिज्ञा प्रियस्य नीता सुहृदः कृतिञ्च।
अलोकसामान्यगुणस्तनूजः परीक्षणार्थं प्रकटीकृतश्च॥ (२०)

अव। तदो, किं ति मालदीं अमच्चो अप्पणा माहवस्स ण पडिवादेदि, जेण चोरिआविवाहे भअवदीं तुवरावेदि? (ख)

काम। तां याचते नरपतेर्नर्मसुहृन्नन्दनो नृपमुखेन।
तत्साक्षात्प्रतिषेधः कोपाय शिवस्त्वयमुपायः॥ (२१)

अव। अच्चरीअं! अच्चरीअं! ण क्खु अमच्चो माहवस्स णामम्पि जाणादि त्ति णिरवेक्खदाए लक्खीअदि (ग)।

काम। संवरणं हि तत्।

---

(ख) ततः किमिति मालतीममात्यो माधवस्य आत्मना न प्रतिपादयति। येन चौरिकाविवाहे भगवतीं त्वरयति।

(ग) आश्चर्यमाश्चर्यम्! न खल्वमात्यो माधवस्य नामापि जानातीति निरपेक्षतया लक्ष्यते।

---

प्रियमित्रस्य भूरिवसोः कृतिञ्च आरब्धं नीता प्रापिता अलोकसामान्यगुणः भूतल-दुर्लभगुणस्तनूजः सुतः माधवः वर इत्यर्थः परीक्षणार्थं प्रकटीकृतः प्रकाशितः विवाहप्रवृत्तिसाधनार्थम् प्रकटीकृतः इत्यर्थः।

(२१) तामिति। नन्दननामा राज्ञः नर्मसुहृत् अन्तःपुरसचिवः नृप-मुखेन नृपद्वारा तां मालतीं याचते। तत्र साक्षात् निषेधः राज्ञः कोपाय भविष्यति। अतः प्रारब्धम् अयं तु मद्द्वारा गुप्तसंयोजनरूपः उपायः शिवः परि-णाममङ्गलकरः।

काम। कथितमेव मे मालतीधात्रेय्या लवङ्गिकया।

भूयोभूयः सविधनगरीरथ्यया पर्यटन्तं
दृष्ट्वा, दृष्ट्वा, भवनवलभीतुङ्गवातायनस्था।
साक्षात्कामं नवमिव रतिर्मालतीमाधवं यत्
गाढोत्कण्ठालुलितलुलितैरङ्गकैस्ताम्यतीति ॥ ( २५ )

अव। वाढं, जदो ताए वि उक्कण्ठाविणोदणिमित्तं माहव-
ड़िच्छन्दअं आलिहिदं, तं लवङ्गिआए अज्ज मन्दारिआए
त्थे णिहिदं दाव ( क )

काम। [ विचिन्त्य। ] सुविहितं लवङ्गिकया, यतो.
ाधवानुचरः कलहंसकस्तां विहारदासीं मन्दारिकां काम-
ते, इत्यनेन तीर्थेन घटेत तत्प्रतिच्छन्दकं उपोद्घातेन माध-
ान्तिकमुपेयादित्यभिप्रायः।

अव। अज्ज, माहवोवि कोदूहलमुप्पादिअ, मए पउत्तम-
अमहूसवं मअरंदुज्जाणं पभादे अणुप्पेसिदो, तहिं
तल मालदी गमिस्सदि, तदो अण्णोण्णदंसणं भोदुत्ति ( ख )

---

( क ) वाढं, यतस्तयाऽप्युत्कण्ठाविनोदनिमित्तं माधवप्रतिच्छन्दकमालि-
ातं तल्लवङ्गिकया अद्य मन्दारिकायाहस्ते निहितं तावत्। वाढं, अतितरा-
ुरला इत्यर्थः। प्रतिच्छन्दकं प्रतिकृतिम्।

( ख ) अद्य माधवोऽपि कौतूहलमुत्पाद्य मया प्रवृत्तमदनमहोत्सवं मदनो-
ानं प्रभातेऽनुप्रेषितस्तत्र किल मालती गमिष्यति, ततोऽन्योन्यदर्शनं भवत्विति।

---

( २५ ) भूय इति। भवनवलभीतुङ्गवातायनस्था प्रासादोपरिस्थगवाक्ष-
स्थितवर्तिनी मालती सविधनगरीरथ्यया सन्निकटस्थितनगरीमार्गेण पर्यटन्तं
व्रजन्तं माधवं नवं मनोहरं साक्षात् कामं कन्दर्पं रतिरिव भूयोभूयः अनीकं
नौधाऽ विवक्षितः। दृष्ट्वा दृष्ट्वा पुनः पुनरवलोक्य। यत् सा गाढोत्-
कण्ठालुलितलुलितैर्भृशोत्कण्ठाव्यथितैरङ्गैर्गात्रैस्ताम्यतीति व्यथत इति।

मदयन्तिआं जइ समुव्वहदि, तंपि णाम माहवस्स दुदीअं पिअं किदं भोदि ( अ )

काम। नियुक्तैव मया मत्प्रियसखी तत्र बुद्धरक्षिता।

अव। सुविहिदं भअवदीए किदम्।

काम। [ विचिन्त्य। ] तदुत्तिष्ठ, माधवप्रवृत्तिमुपलभ्य, मालतीमेव पश्याव:।

[ इत्युभे उत्तिष्ठत:। ]

काम। [ विचिन्त्य। ] अत्युदारप्रकृतिर्मालती, तन्निपुणं निसृष्टार्थदूतीकल्पस्तन्त्रयितव्य:। * सर्वथा।

शरज्ज्योत्स्ना कान्तं कुमुदमिव तं नन्दयतु सा,
सुजातं कल्याणीभवतु कृतकृत्य: स च युवा।
वरीयानन्योन्यप्रगुणनिर्माणनिपुणो,
विधातुर्व्यापार: फलतु च मनोज्ञश्च भवतु ॥ २६ ॥

[ इति निष्क्रान्ते विष्कम्भक: ] ( २७ )

---

मित्रं मकरन्दो नाम, नन्दनस्य भगिनीं मदयन्तिकां यदि समुद्वहति, तदपि नाम माधवस्य द्वितीयं प्रियं कृतं भवति।

* अत्युदारा अत्युदात्ता प्रकृति: यस्या: सा। नायकस्य नायिकायाश्च अभिप्रायं ज्ञात्वा स्वमत्या या कार्यं साधयति सा निसृष्टार्था दूती तस्या: कल्प: व्यापार: तन्त्रयितव्य: प्रस्तावनीय: इतिभाव:।

---

( २६ ) शरदिति। सा मालती शरज्ज्योत्स्ना शारदीया कौमुदी कान्तं रम्यं कुमुदमिव सुजातं शोभनजन्मानं तं माधवं नन्दयतु कल्याणीभवतु स च युवा माधव: कृतकृत्य: कल्याणीभवतु वरीयान् वरिष्ठ: अन्योन्यस्य प्रगुणगुण उत्कृष्टगुणसन्निर्माणनिपुणस्तद्रचनाकुशल: विधातु: स्रष्टुर्व्यापारश्च फलतु फलवान् भवतु मनोज्ञश्च भवतु।

( २७ ) विष्कम्भकलक्षणमाह दर्पणकार: वृत्तवर्तिष्यमाणानां कथांशानां निदर्शक:। संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शित इति।

[ ततः प्रविशति यथानिर्दिष्टो माधवः । ]

माधवः । (२८) [ स्वगतं ] ।

तामिन्दुसुन्दरमुखीं सुचिरं विभाव्य
चेतः कथं कथमपि व्यपवर्त्तते मे ।
लज्जां विजित्य, विनयं विनिवार्य्य, धैर्य्य-
मुन्मथ्य, मन्मथविवेकमकाण्ड एव ॥ (३०)

आश्चर्य्यम् । यद्विस्मयस्तिमितमस्तमितान्यभाव-
मानन्दमन्दममृतप्लवनादिवाभूत् ।
तत्सन्निधौ तदधुना हृदयं मदीय-
मङ्गारचुम्बितमिव व्यथमानमास्ते ॥ (३१)

मक । सखे ! माधव ! इत इतः ।

माध । [परिक्रम्य] । कथं, प्रियवयस्यो मम मकरन्दः ।

मक । [ उपसृत्य । ] सखे ! ललाटन्तपस्तपति घर्मां-शुस्तदस्मिन् उद्याने मुहूर्त्तमुपविशावः ।

माध । यथा प्रियवयस्याय रोचते । [इत्युभावुपविशतः] ।

---

भावाः पदार्थाः चौरता धैर्यं चिपन्ति छिन्दन्ति । अत्र नर्मस्फोटाख्या कौशिकी वृत्तिः नर्मस्फोटो भावलेशैः सूचिताल्परसो मतः इति साहित्यदर्पणे ।

( २८ ) स्वगतलक्षणं यथा "यत्तु श्राव्यं न सर्वस्य स्वगतं तदिहोच्यते ।"

( ३० ) तामिति । इन्दुसुन्दरमुखीं विधुमुखीं तां मालतीं सुचिरं बहुक्षण-पर्यन्तं विभाव्य निरूप्य अकाण्ड एव अकस्मादिव मे मम मन्मथविवेकं अल्पज्ञानं चेतश्चित्तं लज्जां विजित्य विनयं विनिवार्य्य धैर्य्यमुन्मथ्य कथं कथमप्यतिकष्टेन व्यपवर्त्तते निवर्त्तते । मालत्यां सम्बद्धं सत् मे चित्तं इतिभावः ।

( ३१ ) यदिति । यन्मदीयं हृदयं विस्मयस्तिमितम् आश्चर्यस्तब्धम् अस्त-मितान्यभावं केवलं तदेकपरायणम् आनन्दमन्दं हर्षजडम् अमृतप्लवनादिव सुधारसादिव तत्सन्निधौ मालत्यन्तिके अभूत् तदानीं प्रियासमीपे अमृतवत्सुखी तन्मदीयं हृदयं अधुना अङ्गारचुम्बितमिव अङ्गारस्पृष्टमिव दह्यते इति शेषः ।

कल। [ दृष्ट्वा। ] कधं, मअरंदसहअरो इदं ज्जेव बालब-उलुज्जाणं अलंकरेदि माहवो, ता दंसेमि, मअणविअणाखिज्ज-माणमालदीलोअणसुहावहं अत्तणो से पडिच्छंदअं। अहवा मुहुत्तं विस्सामसोक्खं दाव अणुभोदु। (ठ)

मक। तदस्यैव तावत् उच्छ्वसितकुसुमकेसरकषायशीत-लामोदवासितोद्यानस्य * काञ्चनपादपस्याधस्तादुपविशावः।

( तथा कुरुतः। )

मक। वयस्य! माधव! अद्यैव तावत्सकलनगराङ्ग-नाजनप्रवर्त्तितमहोत्सवाभिराममदनोद्यानयात्राप्रतिनिवृत्तम-न्यादृशं भवन्तमवधारयामि, अपि नाम मनागवतीर्णोऽसि रतिरमणबाणगोचरम्?

[ माधवो लज्जया अधोमुखस्तिष्ठति। ]

मक। [ विहस्य। ] तत्किमवनतमुग्धमुखपुण्डरीकस्ति-ष्ठसि?

पश्य। (१२) अन्येषु जन्तुषु रजस्तमसावृतेषु,
विश्वस्य धातरि समः परमेश्वरे च।

---

(ठ) कथं मकरन्दसहचर इदमेव बालबकुलोद्यानमलङ्करोति माधव-स्तद्दर्शयामि मदनवेदनाखिद्यमानमालतीलोचनसुखावहम् आत्मनस्य प्रतिच्छन्द-कम्। अथवा मुहूर्त्तं विश्रामसौख्यं तावदनुभवतु।

* उच्छ्वसितानाम् उत्फुल्लानां कुसुमानां ये केसराः किञ्जल्काः तैः कषायः लोहितः शीतलश्च य आमोदः तेन वासितं सुरभीकृतं उद्यानं येन तस्य।

---

सर्वमङ्गलमयं, प्रायस रजकंः। अतएव व्यञ्जनानां क्लिश्यत् बाले। अधुना केवलं ज्ञ ममनुभवति।

(१२) अन्येष्विति। अन्येषु जन्तुषु प्राणिषु रजस्तमसा आवृतेषु आच्छादितेषु च विश्वस्य धातरि निर्माणकारके ब्रह्मणि परमेश्वरे महादेवे च रजस्तमसाहिते

सोऽयं प्रथितविभवः खलु चित्तजन्मा
मा लज्जया तव कथञ्चिदपह्नुतिर्भूत् ॥

माध । वयस्य ! किं न कथयामि श्रूयतां । गतोऽह-मवलोकिताजनितकौतुकः कामदेवायतनं, तत्र च इतस्ततः परिक्रम्यावलोक्य च परिश्रमादुल्लसितमदिरामोदमधुरपरि-मलाकृष्टसकलमिलदलिपटलसङ्कुलाकुलितवकुलमुकुलावली-मनोहराभरणरमणीयस्याङ्गनभुवो बालवकुलस्य आलवाल-परिसरे स्थितः । तत्र च यदृच्छया निरन्तरनिपतितानि कुसु-मानि आदाय विदग्धरचनामनोहरां स्रजमभिनिर्मातुमारब्ध-वानस्मि । अनन्तरञ्च सञ्चारिणीव देवस्य मकरकेतोर्जगद्विजय-वैजयन्तिका, निर्गत्य गर्भभवनादुज्ज्वलविदग्धसुन्दरनेपथ्यविर-चनाविभावितकुमारीभावा महानुभावप्रकृतिः अत्युदारपरि-जना कापि तत्र एव आगतवती ।

(११) सा रामणीयकनिधेरधिदेवता वा
सौन्दर्यसारसमुदायनिकेतनं वा ।

---

सान्यादिनये तु परमेश्वरस्य गुणत्रयसामान्यविशिष्टत्वेनैवमुक्तिरित्यर्थः । सुमः चविचलितः । परमेश्वरापेक्षया कामस्य हीनत्वेऽपि तत्तुल्यत्वकल्पना-दतिशयोक्तिः । सोऽयं प्रथितविभवः विख्यातमाहात्म्यः चित्तजन्मा मनोजः कामः खलु निश्चये । ते तव लज्जया कथञ्चित् कष्टेन अपह्नुतिर्माभूत् । लज्जां कृत्वा प्रश्नोत्तरदाने मा मौनावलम्बिना भवता भाव्यमिति भावः । वसन्ततिलक-मनुष्टुब्नीयमवीति प्रसिद्धम् ।

(११) सेति । हे सखे ! सा रामणीयकनिधिः सौन्दर्याकरस्य अधिदेवता आकारवत्याभरणमिति भावः । अथवा सौन्दर्यसारसमुदायानां लावण्य-शोभाकान्त्यादीनां निकेतनमाश्रयीभूता विधेयप्राधान्यात् नपुंसकत्वम् । तस्याः प्रभुत्वा विनतं निर्मितं इन्दुसुधामृणालज्योत्स्नादि कारणं मदनस्य वेधा मदन एव रतिकारकः लावण्योपमादीनां स्रष्टा मदन एव भवति । एतत्र

प्रायः शुभञ्च विदधात्यशुभञ्च जन्तोः,
सर्वङ्कषा भगवती भवितव्यतैव ॥

मक। वयस्य माधव! स्नेहश्च निमित्तसव्यपेक्ष इति विप्रतिषिद्धमेतत्।

पश्य। व्यतिषजति पदार्थानान्तरः कोऽपि हेतु-
र्न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते।
विकसति हि पतङ्गस्योदये पुण्डरीकम्
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ॥ (३६)

ततस्ततः?

माध। ततश्च तत्र,
सभ्रूविलासमथ सोऽयमितीरयित्वा,
सप्रत्यभिज्ञमिव मामवलोक्य तस्याः।

---

विपद, तदर्थमेव एतत् सर्वा हृदय समित्यर्थः। अनपेक्षितहेतु कारणमनपेक्ष्यैव तस्या मामकमन्तरङ्गम्। तदवलम्बनेन नैव सुखं दृश्यते प्रत्युत केवलं सन्तापराशिर्वर्द्धते इत्यर्थः। अर्थान्तरं न्यस्यति, सर्वङ्कषा सर्वहरा भगवती भवितव्यतैव अवश्यम्भावि प्राक्तनकर्म प्रायो बाहुल्येन जन्तोः प्राणिनः शुभञ्च अशुभञ्च विदधाति करोति। जनानां सुखदुःखं अदृष्टस्यैव कारणत्वात् भवितव्यतामूलक मेवात्र दुःखमिति तात्पर्यार्थः।

(३६) व्यतिषजतीति। आन्तरः अन्तरगतः कोऽपि हेतुः पदार्थान् व्यतिषजति सम्बन्धयति। प्रीतयः प्रेमाणः बहिरुपाधीन् बाह्यहेतून् न संश्रयन्ते नावलम्बन्ते खलुनिश्चयार्थाम्। पदार्थान्तरमिलने अन्तर्गतो हेतुरेव तत्र कल्पान्तकल्पेन निश्चितः प्रीत्यादयस्तु बाह्यहेतूनां सौन्दर्यादीनां सवलम्बने नापि समर्था इत्यर्थः। पतङ्गोदये सूर्योदये पुण्डरीकं कमलमतिकोमलमपीत्यर्थः। विकसति स्फुटति, हिमरश्मौ हिमांशौ उद्गते उदिते चन्द्रकान्तो मणिविशेषः द्रवति गलति तीव्रातीव्रयोः सूर्येन्दुकरयोः सम्बन्धेन कमलपाषाणपदार्थयोः विकसनद्रवणयोः तादृशकार्य्यं प्रति आन्तरिकहेतुत्वमायातीत्यर्थः। अतः अत्र स्वाभाविक एव स्नेहः इति तात्पर्यम्।

अन्योन्यभावचतुरेण सखीजनेन,
मुक्तास्तदा स्मितसुधामधुराः कटाक्षाः॥ (१७)

मक। [स्वगतम्।] कथं प्रत्यभिज्ञापि नाम

माध। अथ ताः सलीलमुत्तालकरकमलललिततालिकातरलवलयावलीकम् उच्चस्तमत्तकलहंसविभ्रमाभिरामचरणमञ्जुरण-झणझणाय--मानमञ्जीरमञ्जुशिञ्जितानुविद्धमेखलाकलापकिङ्किणीरणत्कारमुखरं प्रतिनिवृत्त्य भर्तृदारिके! दिष्ट्या वर्द्धामहे, यदत्रैव कोऽपि कस्यापि तिष्ठतीति माम् अङ्गुलीदर्शनविलासेन आख्यातवत्यः।

मक। [स्वगतम्]। हन्त, महतः प्रागनुरागस्योद्भेदः।

कल। [आकर्ण्य]। कथं सरसरमणीयाणुबन्धिनी इत्थीयणकधा? (ड)

मक। ततस्ततः।

माध। अत्रान्तरे किमपि वाग्विभवातिवृत्त-
वैचित्र्यमुल्लसितविभ्रममुत्पलाक्ष्याः।
तद्भूरिसात्त्विकविकारमपास्तधैर्य-
माचार्यकं विजयि मान्मथमाविरासीत्॥ (१८)

---

(१७) वक्त्रं विकासीति। अन्योन्यभावचतुरेण परस्परानङ्गरसनिपुणेन तस्याः मालत्याः सखीजनेन कोऽयम् अयं वः यन्निमित्तं सखि! त्वं क्लिष्टासीत्यर्थः। इति वक्त्रं विकासं वक्त्रमभिमतं:। इति वचनं पूर्वोक्तवत्त्वा कर्णयित्वा, प्रत्यभिज्ञा अङ्कुलमङ्गलार्थं तथा च वर्णनार्थं कस्यचिन्मिथ पूर्वानुभूतमिव आमवलोक्य तदा तस्याः स्मितमेव सुधा तया मधुराः कटाक्षा अपाङ्गविक्षेपाः मुक्ताः क्षिप्ता इत्यर्थः।

(१८) अत्रान्तर इति। अत्रान्तरे तादृगवसरे कमलाक्ष्याः पङ्कजाक्ष्याः किमप्यवाच्यं वाग्विभवातिशयवैचित्र्यं वाक्प्रपञ्चातीतवैचित्र्यम् उल्लसितविभ्रमं विभ्रमहर्षितं भूरिसात्त्विकविकारं विविधसात्त्विकाङ्गवचनवसीतम् अपास्तधैर्यं

ततश्च। स्तिमितविकसितानामुल्लसद्भ्रूलतानाम्,
मसृणमुकुलितानां प्रान्तविस्तारभाजाम्।
प्रतिनयननिपाते किञ्चिदाकुञ्चितानाम्,
विविधमहमभूवं पात्रमालोकितानाम्॥ (३९)

तैश्च। अलसवलितमुग्धस्निग्धनिष्पन्दमन्दै-
रधिकविकसदन्तर्विस्मयस्मेरतारैः।
हृदयमशरणं मे पक्ष्मलाक्ष्याः कटाक्षै-
रपहृतमपविद्धं पीतमुन्मूलितञ्च॥ (४०)

एवमहन्तु तस्याः सर्वाकारहृदयङ्गमायाः सम्भाव्यमानस्नेहरसेनाभिसन्धिना विधेयीकृतोऽपि पारिप्लवत्व मात्मनोऽपनिह्नोतुकामः, प्राक्प्रस्तुतस्य वकुलदाम्नो यथा कथञ्चिदवशेषं ग्रथितवानेव, ततो भिन्नवेत्रगर्भपाणिवर्षवरप्रायपुरुषपरिवारा, गजवधूमारुह्य, नगरगामिनं मार्गम् इन्दुवदना अलङ्कृतवती। तदा च।

---

धैर्यमास्थ अतएव विजयि अन्यैरजेयमित्यर्थः। तत् प्रसिद्धं मान्मथं मन्मथसम्बन्धि आचार्यकं गुरुत्वं कामजनितचेष्टितमित्यर्थः आविरासीत् प्रादुर्बभूव।

(३९) स्तिमितेति। स्तिमितविकसितानां निश्चलस्फुटानां उल्लसद्भ्रूलतानां विचलितभ्रुवां मसृणमुकुलितानां मदुस्निग्धमुकुलभावानां प्रान्तविस्तारभाजां विस्तृतापाङ्गदेशानां, प्रतिनयननिपाते नयननिपातं प्रति विलक्षणेऽव्ययीभावः। निमेषपतनकाले इत्यर्थः। किञ्चिदाकुञ्चितानां किञ्चिन्मुकुलितानाम् आलोकितानां नयनानां अहं विविधम् अनेकप्रकारं पात्रं भाजनमभूवम् जातः।

(४०) अलसेति। अलसवलितमुग्धस्निग्धनिष्पन्दा अतएव मन्दैः, आलस्यमापन्नैः, अधिकविकसदन्तः, अधिकं विकसत् अन्तर्येषां तैः विस्मयस्मेरतारैः विस्मययुक्ततारकैः तैश्च तैरिति विशेषणसमासः। पक्ष्मलाक्ष्याः निबिडपक्ष्मसमेतायाः कटाक्षैरपाङ्गैर्मे मम अशरणमसहायं हृदयम् अपहृतम् अपविद्धं परिक्षिप्तं पीतम् उन्मूलितञ्च ततोऽनुभूतमनीव जातम्।

यान्त्या मुहुर्वलितकन्धरमाननं तत्
आवृत्तवृन्तशतपत्रनिभं वहन्त्या।
दिग्धोऽमृतेन च, विषेण च, पक्ष्मलाक्ष्या,
गाढं निखात इव मे हृदये कटाक्षः॥ (४१)
ततः प्रभृति
परिच्छेदातीतः सकलवचनानामविषयः,
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान्।
विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यन्तर्जडयति च तापञ्च कुरुते॥ (४२)
अपि च। परिच्छेदव्यक्तिर्भवति न पुरःस्थेऽपि विषये,
भवत्यभ्यस्तेऽपि स्मरणमतथाभावविरसम्।
न सन्तापच्छेदो हिमसरसि वा चन्द्रमसि वा
मनो निष्ठाशून्यं भ्रमति, च किमप्यालिखति च।(४३)

---

(४१) यान्त्येति। मुहुर्वारं वारं वलितकन्धरं वक्रितग्रीवं यथा स्यात् तथा पश्चाद्वर्तिनं मां द्रष्टुमित्यर्थः। यान्त्या गच्छन्त्या आवृत्तवृन्तशतपत्रनिभम् आवर्तितनालकमलसदृशं तत् सुन्दरम् आननं मुखं वहन्त्या पक्ष्मलाक्ष्या च सुनेत्रया अमृतेन दिग्धः लिप्तः विषेण च दिग्धो लिप्तः कटाक्षः मे मम हृदये गाढं निखात इव प्रोथित इव।

(४२) परिच्छेदेति। परिच्छेदातीतः इयत्तारहितः इयत्तया वक्तुमशक्य इत्यर्थः। सकलवचनानाम् अविषयः सकलवाक्पथातीत इत्यर्थः। तथा पुनर्जन्मनि परलोके अस्मिन् इह च काले यः अनुभवपथम् अनुभवज्ञानविषयत्वं न गतवान् इह परत्र च अनुभवितुमशक्य इत्यर्थः। विवेकस्य विवेचनायाः प्रध्वंसात् नाशात् उपचितमहामोहः, वर्धितमोहान्धकारः, अतएव गहनः भीषणः, तस्य च, विवेकनाशकत्वेन तमस्त्व सुतरां चितमित्यर्थः। कोऽपि अनिर्वचनीयः विकारः विरहजन्यवैकृतम् अन्तः अन्तःकरणं जडयति मोहयति, तापं कुरुते तापयति च। एतेन विरहस्यावस्थात्वमुक्तम्।

(४३) परिच्छेदेति। पुरःस्थेऽपि समीपवर्तिन्यपि विषये घटपटादौ

कल। दिट्ठं क्खु एसो कण्णवि अवहरिदो, अवि णाम मालदी जेव्व सा भवे ? (ङ)

मक। [स्वगतम्]। अहो ! अभिव्यक्तः, तत्किं निषेधयामि सुहृदम्।

अथवा। मामूमुहत् खलु भवन्तमनन्यजन्मा,
मा ते मलीमसविकारघना मतिर्भूत्।
इत्यादि नन्विह निरर्थकमेव यस्मात्
कामश्च जृम्भितगुणो, नवयौवनञ्च ॥ (४४)

---

( ङ ) दृष्टं खल्वेष केनाप्यपहृतः, अपि नाम मालत्येव सा भवेत् ?।

---

परिच्छेदव्यक्तिः इयत्ताङ्कुरणम् अयमेव घट इत्यादिकं न भवति। अभ्यस्तोऽपि पुनः पुनराहतोऽपि अतथाभावविरसम् अतथाभावेन अयथार्थत्वेन विरसं वैरस्यवत् अरम्यं भवति। विषयान्तरं अर्थान्तरमुद्युञ्जानोऽपि कृतिपदात् स्खलितोऽस्मीति भावः। सन्तापच्छेदो विरहव्यथाक्षयः हिमसरांसि शीतलसरोवरं न चन्द्रमहो वा हिमांशो वा न भवतीत्यर्थः। विशिखवलयस्य तादृक् सम्भावनाया-मपि तदकरणात् विरहजन्यसन्तापस्यातिशय्यं वर्त्तते। तथा मनः कर्त्तृ निश्चा-मूल्यं धैर्य्यरहितं सत् भ्रमति चञ्चलं भवतीत्यर्थः। किमपि आकाशकुसुमवत् वस्तु आलिखति रचयति च। एतेन मनसः सङ्कल्पाख्यावस्था उक्ता।

( ४४ ) मेति। अनन्यजन्मा न अन्यस्मात् जन्म यस्य सः कन्दर्पः भवन्तं मा मूमुहत् खलु। मा मन्दयोगे अनुशायें शुक्। ते तव मतिः मलीमस-विकारघना मालिन्यनिविड़ा माभूत् न भवतु पूर्ववत् शुक्। ननु भोः! माधव इत्यर्थः। इत्यादि पूर्वोक्तं निषेधवाक्यम् इह त्वयि निरर्थकमेव। यस्मात् यतो हेतोः कामश्च जृम्भितगुणः प्रकटितसामर्थ्यः तवेति शेषः। नवयौवनञ्च जृम्भित-गुणं विकृतिपरिणामिनमित्यर्थः। पक्षे कामः जृम्भितगुणः आततज्यधनुर्गुणः, नवयौवनं जृम्भितगुणं प्रकाशितसद्धर्मम्। कामोद्रेके यूनामक्षोभत्वादिकं भवतीति प्रसिद्धम्।

[प्रकाशम्।] अपि वयस्येन विदिते तदन्वयनामनी?

माध। सखे! श्रूयतां, अथ तस्याः करेणुकारोहणसमय एव महतः सखीकदम्बकादन्यतमा वारयोषित् विलक्ष्य, बालबकुलकुसुमावचयक्रमिव मेदीयसी भूत्वा, प्रणम्य, कुसुमापीडव्याजेन मामेवमुक्तवती, महाभाग! सुश्लिष्टगुणतया रमणीय एव वः सुमनसां सन्निवेशः, कुतूहलिनी च नो भर्तृदारिका वर्तते, तस्यामभिनवो विचित्रः कुसुमेषुव्यापारस्तत्रभवतु कृतार्थता वैदग्ध्यस्य, फलतु निर्माणरमणीयता, विधातुः आसादयतु सरस एव भट्टदारिकायां कण्ठावलम्बनमहार्घताम् इति।

मकरन्दः। अहो! वैदग्ध्यम्।

माध। तया च मदनुयुक्तया समाख्यातमियममात्यभूरिवसोः प्रसूतिर्मालती नाम, अहञ्च प्रसादभूमिर्भर्तृदारिकायाः धात्रेयिका लवङ्गिका नामेति।

कल। [सहर्षम्।] किं णाम मालदीत्ति? दिट्ठिआ विअसिदं क्खु भअवदा देवेण कुसुमाउहेण, ता जिदं अम्हेहिं (क)

मक। अमात्यभूरिवसोरात्मजेत्यपर्य्याप्तिर्बहुमानस्य।

अपि च। मालती मालतीति मोदते भगवती कामन्दकी, तां च किल राजा नन्दनाय प्रार्थयते इति किंवदन्ती श्रूयते।

माध। तया चाहमभ्यर्थमानस्तां बकुलमालामात्मनः

---

(क) किं नाम मालतीति? दिष्ट्या विकसितं खलु भगवता देवेन कुसुमायुधेन, तज्जितमस्माभिः।

कण्ठादवतार्य्य दत्तवान् असौ पुनरभिनिविष्टया दृशा मालती-मुखावलोकनविहस्ततया * क्षिप्रमविरचितैकभागामेतामेव बहुमन्यमाना महानयं प्रसाद इति आकृत्य गृहीतवती, अनन्तरञ्च यात्राभङ्गप्रचलितस्य महतः पौरजनस्य सङ्कुलेन विघटितायां तस्यामागतोऽस्मि।

मक। वयस्य! मालत्या अपि स्नेहदर्शनात्सुश्लिष्टमेतत्, योऽपि हि कपोलपाण्डुतादिचिह्नसूचितः प्राक् प्रवृद्धस्तस्याः कामाभिष्वङ्गः, सोऽपि त्वन्निबन्धन इत्यभिव्यक्तमेवैतत्, एतत्तु न ज्ञायते, क्व दृष्टपूर्वस्तया वयस्य इति, न खलु तादृश्यो महाभागधेयाः कुमार्य्योऽन्यत्रासक्तमनसो भूत्वा अन्यत्र अनु-रागिण्यो भवन्ति। अपि च।

अन्योन्यमभिमतदृशां सखीनाम् तस्यास्त्वयि प्रागनुरागलिङ्गम्।
कस्यापि कोऽपीति निवेदितञ्च धात्रेयिकायाश्चतुरं वचश्च॥ (४५)

कल। [ उपसृत्य। ] एवं चित्रफलकं।

इति चित्रफलकं दर्शयति। उभौ पश्यतः।

मक। कलहंसक! केनैतन्माधवस्य प्रतिबिम्बमभिलिखि-तम्?

---

* विहस्ततया व्याकुलतया।

( ४५ ) अन्योन्येति। हे वयस्य! अन्योन्यमभिमतदृशां अन्योन्यं अभिमते अभी-प्सिते दृशौ यासां परस्परदरविकसितानां सखीनां मालतीसहचरीणां तस्याः मालत्याश्च प्राक् प्रथमम् अनुरागचिह्नं सौहार्दचिह्नं कस्यापि जनस्य कोऽप्यनु-रागैकहेतुश्च इति धात्रेयिकायाश्चतुरं सुरसं श्लिष्टमिति यावत् वचश्च त्वयि निवे-दितम् विज्ञापितम्। अत्रानुरागधात्रीश्लिष्टवाक्यैः परस्परवाक्यार्थहेतुकत्वात् काव्यलिङ्गम् अलङ्कारः।

दृष्टस्वरूपा च भवतो विकारहेतुः तदत्रैव लिख्यतां मालती।

माध। यदभिरुचितं वयस्याय, तदुपनय चित्रफलकं चित्रवर्त्तिकाञ्च। [मकरन्द उपनयति]।

माध। [लिखन्]। सखे मकरन्द!

वारंवारं तिरयति दृशोरुद्गमं बाष्पपूर-
स्तत्सङ्कल्पोपहितजडिम स्तम्भमभ्येति गात्रम्।
सद्यः स्विद्यन्नयमविरतोत्कम्पलोलाङ्गुलीकः,
पाणिर्लेखाविधिषु नितरां वर्त्तते, किङ्करोमि॥ (४७)

तथापि व्यवसितोऽस्मि। [चिरादभिलिख्य प्रदर्शयति]।

मक। [विलोक्य]। उपपन्नस्तावदत्र भवतोऽभिष्वङ्गः। [सकौतुकम्]। कथमचिरेणैव निर्माय लिखितः श्लोकः। [वाचयति]।

---

(४७) वारंवारमिति। बाष्पपूरः अश्रुप्रवाहः वारंवारं अभीक्ष्णं आभीक्ष्ण्ये द्विरुक्तिः। दृशोर्नयनयोः उद्गमं प्रचारं तिरयति आच्छादयति। तिरस्करोतीति वक्तव्ये टिकोपि सिद्धम्। तत्सङ्कल्पोपहितजडिम तस्या मालत्याः सङ्कल्पेन निरन्तरध्यानेन उपहितः जनितः जडिमा कार्य्याक्षमत्वरूपः यस्य तत् गात्रं देहः स्तम्भं अचलत्वं अभ्येति प्राप्नोति तथा सद्यस्तत्क्षणात् स्विद्यन् सञ्जातस्वेदः अविरतोत्कम्पलोलाङ्गुलीकः अविरतमुत्कम्पो यस्य सः, अतएव लोलाङ्गुलीकः लोलाश्चञ्चला अङ्गुल्यो यस्य स अङ्गुलीकः। ततः समानाधिकरणसमासः। अयं मदीयः पाणिः करः लेखाविधिषु चित्रव्यापारेषु नितरामतिशयेन तिकव्याधेध्यादिनाम् प्रसरः। वर्त्तते तिष्ठति किन्तु न लिखति किं करोमि उपायान्तराभावात् कार्य्याक्षमत्वं ज्ञातवे। अत्र माधवस्य कम्पस्वेदरूपा सात्त्विकी अवस्था व्यक्ता।

जगति जयिनस्ते ते भावा नवेन्दुकलादयः,
प्रकृतिमधुराः सन्त्येवान्ये मनो मदयन्ति ये।
मम तु यदियं याता लोके विलोचनचन्द्रिका,
नयनविषयं जन्मन्येकः स एव महोत्सवः॥ (४८)

[प्रविश्य सत्वरं मन्दारिका]। कलहंसअ! पदाणुसारेण उपलद्धोसि। [माधवमकरन्दौ दृष्ट्वा सलज्जम्]। कधं, तेवि महाणुभावा इध जेव्व? (न)।

[उपसृत्य प्रणमति।]

उभौ। मन्दारिके! इहास्यताम्।

मन्दा। [उपविश्य।] कलहंसअ! उवणेहि मे चित्त-फलअं।

कल। [गृहीत्वा।] गेह्न एदम्।

---

(न) कलहंसक! पदानुसारेण उपलब्धोऽसि। कथं तावपि महानुभावौ अत्रैव?

---

(४८) जगतीति। जयिनः उत्कृष्टाः प्रकृतिमधुराः स्वभावसुन्दरास्ते ते प्रसिद्धाः नवेन्दुकलादयः बालसुधांशुकौमुदीप्रभृतयः भावाः पदार्थाः अन्ये तद्-भिन्नाश्च जगति सन्ति, ये भावा मनो हृदयं मदयन्ति आह्लादयन्ति। चन्द्रादी-नामाह्लादजनकत्वे कथं मालत्यां तवानुराग इत्याशङ्कायाह ममेति। किन्तु लोके भुवने इयं विलोचनचन्द्रिका नेत्रकौमुदी यत् मम नयनविषयं दृग्गोचरत्वं याता प्राप्ता जन्मनि मदीये। एकः अद्वितीयः स एव तद्दर्शनरूप उत्सवः महोत्सवः अभवदिति शेषः। चन्द्रादीनां सुखाह्लादजनकत्वे तदपेक्षया मालत्याः सर्वाति-शायित्वं सूचितम्। चन्द्रादीनान्तु जीवनस्य सुखं तेन मालती एव एका जीवनादपि प्राणादपि गुर्वीति भावः।

मन्दा। [विलोक्य]। कलहंसअ ! केण उण, किंणिमित्तं वा, एत्थ मालदी आलिहिदा ?। (प)

कल। जो जेव णिमित्तेण मालदीए (फ)।

मन्दा। [सहर्षं]। दिट्ठिआ दंसिदफलं दाणिं विण्णाणं पआवइणो (ब)।

मक। मन्दारिके ! यदेव वस्तुनि एष ते वल्लभः कथयति, अपि तथा तत् ?

मन्दा। महाभाअ ! अध इम्।

मक। क्व पुनर्मालती माधवं प्राग् दृष्टवती ?

मन्दा। लवङ्गिआ भणादि, वादाअणगदेत्ति।

मक। वयस्य ! ननु अमात्यभवनासन्नरथ्ययैव बहुशः सञ्चरावहे, तदुपपन्नमेतत्।

मन्दा। अणुमण्णन्तु मं महाणुभावा, जाव एदं भअवदो देवस्स मअणस्स सुचरिदं पिअसहीए लवङ्गिआए णिवेदेमि (भ)

मक। प्राप्तावसरमेतद्भवत्याः।

[ मन्दारिका चित्रफलकं गृहीत्वा निष्क्रान्ता ]।

मक। वयस्य ! खरतरकिरणोऽयं भगवान् सहस्रदीधितिः अलङ्करोति मध्यमह्नः, तदेहि संस्त्यायमेव * गच्छावः।

[इत्युत्थाय परिक्रामतः]।

---

(प) कलहंसक ! केन पुनः किं निमित्तं वा अत्र मालती आलिखिता।

(फ) यः येन निमित्तेन मालत्या।

(ब) दिष्ट्या दर्शितफलमिदानीं विज्ञानं प्रजापतेः। विज्ञानं शिल्पनिर्माणकौशलम्।

(भ) अनुमन्यतां मां महानुभावाः, यावदिदं भगवतो देवस्य मदनस्य सुचरितं प्रियसख्या लवङ्गिकाया निवेदयामि।

* संस्त्यायं गृहम्।

माध । एवं हि मन्ये ।

घर्माम्भोविसरविसर्पणैरिदानीम्
मुग्धाक्ष्याः परिजनचारसुन्दरीणाम् ।
तस्याभिर्विरचितविचित्रपत्रलेखा-
वैदग्ध्यं जहति कपोलकुङ्कुमानि ॥ (४९)

अपि च । उन्मीलन्मुकुलकरालकुन्दकोश-
प्रश्च्योतद्घनमकरन्दगन्धबन्धो ! ।
तामीषत्प्रचलविलोचनां नताङ्गी-
मालिङ्गन् पवन ! मम स्पृशाङ्गमङ्गम् ॥ (५०)

मक । अभिहन्ति, हन्त कथमेव माधवम्
सुकुमारकायमनवग्रहः स्मरः ।

---

(४९) घर्मेति । इदानीं मध्याह्ने । घर्माम्भोविसरविसर्पणैः घर्माम्भसां स्वेदजलानां विसरः धारा, तस्य विसर्पणैर्नियतप्रसारणैः मुग्धाक्ष्याः नायिकायाः परिजनचारसुन्दरीणां परिजनबालिकानां कपोलकुङ्कुमानि गण्डस्थलकुङ्कुमलेपनानि (कर्मपदं) तत् प्रसिद्धं प्रातः प्रभातसमये विरचितविचित्रपत्रलेखावै [illegible] रचितकल्पितपत्राकारकपोलभूषणसौन्दर्यं जहति त्यजन्ति । प्रातःकालापेक्षयापि मध्याह्ने स्वकपोलकुङ्कुमानां स्थानभ्रष्टत्वमाधिक्यमुत्प्रेक्षितम् । पार्श्वस्थादीनां यथास्थानभूषणकुङ्कुमादिलेपनं मध्याह्ने च सुकुमारतया तस्य निःसहत्वम् वर्णितम् ।

(५०) उन्मीलदिति । उन्मीलन्ति ईषद्विकसितानि मुकुलानि यस्य स करालो भीषणः कुन्दकोशः, विरहात् अवस्थदुःखत्वाच्च भीषणत्वमित्यर्थः । तस्मात् प्रश्च्योतन् गलन् यो घनः निविडः मकरन्दः कुसुमरसः तस्य यो गन्धः परिमलः तस्य बन्धुः सहचरः तत् सम्बुद्धिः । हे तादृश ! पवन ! वायो ! ईषत्प्रचलविलोचनां दरविकम्पितदृष्टिं विरहकाले पवनस्य भीषणव्यापारवत्तया समन्ततश्चलितलोचनां नताङ्गीं तां मालतीं आलिङ्गन् स्निह्यन् मम अङ्गमङ्गं प्रत्यवयवं स्पृश, मालती तावत्कालिङ्गनजन्यसौभाग्यातिशयेन पवनस्य महत्त्वमेवेऽपि तादृशसौरभ्यलाभप्रदानादिति भावः ।

अचिरेण वैकृतविवर्त्तदारुणः,
कलभं कठोर इव कूटपाकलः ॥ (५१)

तदेषा भगवती कामन्दकी नः शरणम् ॥

माध। [स्वगतम्। ] आश्चर्य्यम् !

पश्यामि तामित इतः पुरतश्च पश्चात्
अन्तर्बहिः परित एव विवर्त्तमानाम्।
उद्बुद्धमुग्धकनकाब्जनिभं वहन्ती-
मासक्ततिर्य्यगपवर्त्तितदृष्टि वक्त्रम् ॥ (५२)

[प्रकाशं। ] वयस्य ! मम हि सम्प्रति,

प्रसरति परिमाथी कोऽप्ययं देहदाह-
स्तिरयति करणानां ग्राहकत्वं प्रमोहः।
रणरणकविवृद्धिं बिभ्रदावर्त्ति गात्रम्,
ज्वलति हृदयमन्तस्ताम्यतत्वञ्च धत्ते ॥ (५३)

इति निष्क्रान्ताः सर्वे।

इति बकुलवीथी नाम प्रथमोऽङ्कः।

---

(५१) अभिहन्तीति। अनवग्रहः प्रतिबन्धशून्य एषः स्मरः कामः सुकुमारकायं सुकोमलाङ्गं माधवं वैकृतविवर्त्तदारुणः विकारान्यथाभावकठिनः कठोरः चिकित्साऽसाध्यः कूटपाकलः करिवातज्वरः कलभं करिशावकमिव अचिरेण झटिति कथमभिहन्ति प्रहरति व्यथयतीत्यर्थः। इवेति यदि स इव स इति निदर्शना साच दुर्ज्ञयकरकलैकभङ्गारूपकैश्च सङ्कीर्य्यते इत्यनयोः सङ्करः।

(५२) पश्यामीति। उद्बुद्धमुग्धकनकाब्जनिभं उद्बुद्धं विकसितं मुग्धं कान्तं यत् सुवर्णपद्मं तन्निभं तत्सदृशं आसक्ततिर्य्यगपवर्त्तितदृष्टि आसक्ता मयि अनुरक्ता तिर्य्यगपवर्त्तिता तिर्य्यक्कुञ्चिता दृष्टिर्यत्र तत् वक्त्रं मुखं वहन्तीं, तथा अन्तर्बहिः अभ्यन्तरे बाह्येऽपि च परितश्चतुर्दिक्षु विवर्त्तमानां गमनवदपवारिवीं तामिव मालतीमिव इतः इतः पुरतश्च पश्यामि अवलोकयामि।

(५३) प्रसरतीति। परिमाथी पीडकः कोऽप्य अनिर्वचनीयोऽयं देहदाहः

प्रथ। हला ! लवङ्गिआ क्खु केसरकुसुमाइं अवचिणोमित्ति, मअणुज्जाणादो जेव्व आगदा ता किं सम्पदं सम्पत्ता ? ( घ )

द्विती। अध इं, तं क्खु पराबट्टन्तीं जेव्व हत्थे गेह्निअ, पडिसिद्धपरिअणा, भट्टिदारिआ उवरिअलिन्दअं समारूढ़ा (ङ)।

प्रथ। णूणं तस्स महाणुभावस्स सङ्कधाए अत्ताणं विणोदेदि (च)।

द्विती। [ निश्वस्य। ] कुदो से आसासो ! एदिणा अज्ज सविसेसदंसणेण अदिभूमिं क्खु ताए अहिणिवेसो गमिस्सदि। अवरञ्च, णन्दणस्स कारणादो महाराओ भट्टिदारिअं पत्थअन्तो अमच्चेण विमत्तो (छ)।

प्रथ। किंत्ति ?

द्विती। पहवदि णिअस्स कण्णआजणस्स महाराओत्ति। ता जादं आमरणं क्खु हिअअसल्लं मालदीए माहवाणुराओत्ति तक्केमि (ज)।

---

( घ ) हला ! लवङ्गिका खलु केसरकुसुमान्यवचिनोमीति, मदनोद्याना-देव आगता तत् किं साम्प्रतं संप्राप्ता।

( ङ ) अथ किं, तां खलु परापतन्तीमिव हस्ते गृहीत्वा, प्रतिषिद्धपरिजना, भर्तृदारिका उपर्य्यलिन्दं समारूढ़ा।

( च ) नूनं तस्य महानुभावस्य संकथया आत्मानं विनोदयति।

( छ ) कुतस्तस्या आश्वासः। एतेनाद्य सविशेषदर्शनेनातिभूमिं खलु तस्या अभिनिवेशो गमिष्यति। अन्यच्च, नन्दनस्य कारणान्महाराजो भर्तृदारिकां प्रार्थयमानोऽमात्येन विप्रमः। अतिभूमिं उत्कर्षम्। अभिनिवेश आसक्तिः।

( ज ) प्रभवति निजस्य कन्यकाजनस्य महाराज इति। तज्जातमामरणं खलु हृदयशल्यं मालत्या माधवानुराग इति तर्कयामि।

लव। सहि! का एत्थ आसासणसीलदा? णं भणामि, सोवि पिअसहीए मन्द-मारुदुव्वेल्लन्त-प्फुल्ल-पुण्डरीअ-विब्भमेहिं पढमावद्ध-बउलावली-विरअणावट्टम-संजमिद-बलामोडि-वित्थरन्तेहिं लोअणेहिं, विजिम्भमाण-विम्हअ-त्थिमिद-दीह-पेरन्त-परिवत्तणा-विलास-तरङ्गिद-भ्रूलदा-विडम्बिदाणङ्ग-सारङ्ग-विब्भम-विअड्ढं अवलोअअन्तो पच्चक्खीकिदो ज्जेव्व (थ)।

माल। [लवङ्गिकां परिष्वज्य]। अम्मो पिअसहि! किं तस्स दाव महाणुभावस्स साहाविआ ज्जेव्व मुहुत्तसण्णिधाइणो जणस्स विप्पलम्भहेतुआ विलासा, आदु जहा पिअसही संभावेदि? (द)

लव। [विहस्य सासूयमिव]। तुमम्वि सहावेण ज्जेव्व तस्सिं अवसरे असङ्कीटम् णच्चिदासि (ध)।

---

(थ) सखि! कात्र आश्वासनशीलता? ननु भणामि, सोऽपि प्रियसख्या मन्दमारुतोद्वेल्लत्प्रफुल्लपुण्डरीकविभ्रमाभ्यां प्रथमावद्धबकुलावलीविरचनापट्टसंयमितबलामोटिविस्तृताभ्यां लोचनाभ्यां विजृम्भमाणविस्मयस्तिमितदीर्घपर्यन्तपरिवर्त्तनाविलासतरङ्गितभ्रूलताविडम्बितानङ्गशारङ्गविभ्रमविदग्धम् अवलोकयन् प्रत्यक्षीकृत एव। उद्वेल्लत् कम्पमानम्। विभ्रमं सादृश्यं शालिनौ। माधवस्य पुण्डरीकसाधनत्वात्। बलामोटा बलात्कारेण विस्तृताभ्यां विस्तारं गच्छद्भ्याम्। विजृम्भमाणः वर्द्धमानः। स्तिमितः स्निग्धः। दीर्घपर्यन्तम् अतिदीर्घम्। परिवर्त्तना पुनः पुनर्गमनं तत्र विलासः विशिष्टदृष्टिव्यापारः तेन तरङ्गितया चालितया भ्रूलतया विडम्बितः समीकृतः अनङ्गशारङ्गविभ्रमः कन्दर्पधनुर्विलासः ततः विदग्धम् इति क्रियाविशेषणम्।

(द) अयि प्रियसखि! किं तस्य तावन्महानुभावस्य स्वाभाविका एव मुहूर्त्तसन्निधायिनो जनस्य विप्रलम्भहेतुका विलासाः, आहोस्वित् यथा प्रियसखी सम्भावयति?

*(ध) त्वमपि स्वभावेनैव तस्मिन्नवसरेऽसङ्कीर्णं नर्त्तितासि।

माल। [सोत्कण्ठं]। हुं, तदो, तदो।

लव। तदो पडिणिउत्तमात्त-जत्ताऊसव-कुदूहलेण पवत्तिदे तस्सिं जणे, मन्दारिआए घरं उवगदम्हि, ताए क्खु चित्तफलअं पभादे हत्थीकिदं आसि (न)।

माल। किंणिमित्तं?

लव। तं क्खु माहवाणुचरो, कलहंसओ णाम कामेदि, सा तस्स दंसइस्सदि त्ति, तदो पिअणिवेदिआ मे मन्दारिआ संवुत्ता (प)।

माल। [स्वगतं]। णूणं तेणावि कलहंसएण तं पडिच्छन्दअं अत्तणो णाहस्स दंसिदं हुविस्सदि। [प्रकाशं]। सहि! किंदाणिं दे पिअं (फ)।

लव। एदं, क्खु, मन्दाविदस्स सन्तावआरिणो दुल्लह-मणोरहाआस-दुक्खाआम दज्झन्त-चित्तस्स एक्कमेत्त-णिव्वावअं दे पडिच्छन्दअं (ब)। [इति चित्रं दर्शयति]।

माल। [सहर्षं सोत्कम्पं चित्रं निर्वर्ण्य]। अहो! ...णं

(न) ततः प्रतिनिवृत्तमात्रयात्रोत्सवकुतूहलेन प्रवृत्ते तस्मिन् जने, मन्दारिकाया गृहमुपगतास्मि, तस्याः खलु चित्रफलकं प्रभाते हस्तीकृतमासीत्। हस्तीकृतं स्वीकृतमित्यर्थः।

(प) तां खलु माधवानुचरः कलहंसको नाम कामयते, सा तस्य दर्शयिष्यतीति, ततो मे प्रियनिवेदिका मन्दारिका संवृत्ता।

(फ) नूनं तेनापि कलहंसकेन तत्प्रतिच्छन्दकमात्मनो नाथस्य दर्शितं भविष्यति। सखि! किमिदानीं ते प्रियम्।

(ब) एतत्, खलु सन्तापितस्य सन्तापकारिणो दुर्लभमनोरथायासदुःखसहाया-सहमानचित्तस्य एकमात्रनिर्वापकं तव प्रतिच्छन्दकम्।

वि मे हिअअस्स अणासङ्गो, जेण एव्वं पि आसासअं विप्पल-म्भंति संभावेमि। कधं अवरद्धम्हि ? (भ)।

[ इति बाष्पयति । ]

जगति जयिनस्ते ते भावा नवेन्दुकलादयः [इत्यादि पूर्वोक्तं पठित्वा सानन्दं]। महाभाअ! सरिसी क्खु दे णिम्माणस्स विरअणामधुरदा, दंसणं उण तक्कालमणोहरं परिणामदीह-सन्दावदारुणम्। धण्णाओ क्खु ताओ कण्णआओ जाओ तुमं ण पेक्खन्ति, पेक्खिअ वा अत्तणो हिअअस्स पहवन्ति।

[ इति रोदिति । ] (म)

लव। सहि! किं एव्वं पि दे णत्थि आसासो ? (य)।

माल। सहि! कधं ?

लव। जस्स कारणादो, उक्खण्डिअबन्धणं विअ, कङ्केल्लिपल्लवं, किलम्मन्त-णोमालिआ-कुसुम-णिस्सहा परिक्खिज्जसि, सोवि आणाविदो भअवदा मम्महेण सन्दावस्स, दूसहत्तणं त्ति (र)।

---

(भ) अहो! इदानीमपि मे हृदयस्य अनासङ्गः, येनैवमपि आश्वासनं विप्रलम्भ इति सम्भावयामि। कथमपराद्धास्मि ?।

(म) महाभाग! सदृशी खलु ते निर्माणस्य विरचनामधुरता, दर्शनं पुनस्तत्कालमनोहरं परिणामदीर्घसन्तापदारुणम्। धन्याः खलु ताः कन्यका यास्त्वां न प्रेक्षन्ते प्रेक्ष्य वा आत्मनो हृदयस्य प्रभवन्ति।

(य) सखि! किमेवमपि ते नास्ति आश्वासः ?

(र) यस्य कारणादुत्खण्डितबन्धनमिव कङ्केल्लिपल्लवं क्लाम्यन्नवमालिका-कुसुमनिःसहा परिक्षीयसे, सोऽपि ज्ञापितो भगवता मन्मथेन सन्तापस्य दुःसहत्वमिति। उत्खण्डितम् छिन्नम्। कङ्केल्लिः अशोकः। निःसहा अक्षमा।

माल। कुसलं दाणिं तस्स महाणुभावस्स भोदु, मम उण दुल्लहो आस्सासो। [सास्रं]। विसेसदो अज्ज पिअसहि! (क)।

[ संस्कृतमाश्रित्य। ]

(१) मनोरागस्तीव्रं विषमिव विसर्पत्यविरतम्,
प्रमाथी निर्धूमं ज्वलति विधुतः पावक इव।
हिनस्ति प्रत्यङ्गं ज्वर इव गरीयानित इतो
न मां त्रातुं तातः प्रभवति, न चाम्बा, न भवती॥

लव। एवं ण्णेदं, पच्चक्खमोक्खदारुणो परोक्ख-दुक्ख-दूसहायास-कारिणो मअणसमागमा होन्ति। अवि अ, जस्स वादाअणन्तर मुहुत्त-मेत्त-दंसणेण, सविसेस-ममिद हुद-वहा-अन्न पुण्णिमा-चन्दोदआ, णिक्करुण-काम व्वावार-संसइद-जीविदा दे सरीराबत्था, तस्स ज्जेव्व संपत्तसविसेसदंसणा अज्ज सन्तप्पसि त्ति किं एत्थ भणिदव्वं। ता, पिअसहि! सलाह-

( क ) कुशलमिदानीं तस्य महानुभावस्य भवतु, मम पुनर्दुर्लभ आश्वासः। विशेषतोऽद्य प्रियसखि!।

( १ ) मन इति। प्रमाथी व्यथकः मनोरागः माधवं प्रत्यभिलाषः तीव्रमुत्कटं विषमिव अविरतं निरन्तरं विसर्पति प्रसरति। तथा विधुतः सन्धुक्षितः पावकः वह्निरिव निर्धूमं धूमरहितं यथा तथा ज्वलति, गरीयान् दुश्चिकित्स्यो ज्वर इव प्रत्यङ्गं प्रत्यवयवं हिनस्ति। इतः कारणात् इतोऽत्र तातः अम्बा माता भवती च मां त्रातुं न प्रभवति न शक्नोति।

निकामं क्षामाङ्गी सरसकदलीगर्भसुभगा,
कलाशेषा मूर्त्तिः शशिन इव नेत्रोत्सवकरी ।
अवस्थामापन्ना मदनदहनोद्दाहविधुरा-
मियं नः कल्याणी रमयति मनः कम्पयति च ॥ (३)

अपि च । परिपाण्डुपांसुलकपोलमाननम्
दधती, मनोहरतरत्वमागता ।
रमणीयजन्मनि जने परिभ्रमन्
ललितो विधिर्विजयते हि माधवः ॥ (४)

अथवा । नियतमनया सङ्कल्पनिर्मितः प्रियसमागमोऽनुभूयते । तथाहि अस्याः ।

नीवीबन्धोच्छ्वसनमधरस्पन्दनं, दोर्विषादः,
स्वेदश्चक्षुस्तिमितमधुराकेकरस्निग्धतारम् ।
गात्रस्तम्भः, स्तनमुकुलयोरुत्प्रबन्धः प्रकम्पो,
गण्डाभोगे पुलकपटलं, मूर्च्छना, चेतना च ॥ (५)

---

(३) निकाममिति । मदनदहनोद्दाहविधुरां विरहानलसन्तापखिन्नामवस्थां आपन्ना प्राप्ता कल्याणी दयाभाजनं शशिनः चन्द्रस्य कलाशेषा कला षोडशांशः शेषो यस्याः सा एकात्मिका मूर्त्तिस्तनुरिव तथा नेत्रोत्सवकरी नयनानन्दजनिका सरसकदलीगर्भसुभगा मृदुलकदलीपत्रसारकोमला इयं क्षामाङ्गी मालती नः अस्माकं मनः निकाममतितरां रमयति मोदयति कम्पयति च ।

(४) परिपाण्डुरिति । परिपाण्डु पांसुलकपोलं धूमपाटलगण्डस्थलं आननं मुखं दधती बिभ्रती मनोहरतरत्वम् आगता प्राप्ता मालतीति शेषः । अत्रार्थान्तरं न्यस्यति । हि यतः माधवः मदनसम्बन्धी ललितः सुन्दरः विधिः रमणीयं मनोज्ञं जन्म यस्य तस्मिन् जने जनेष्वित्यर्थः । जातावेकवचनं परिभ्रमन् विचरन् विजयते । सौन्दर्यादीनाम् कामविकारवर्धकत्वेन प्रसिद्धेरिति भावः ।

(५) नीवीति । नीवीबन्धोच्छ्वसनं वसनग्रन्थिशैथिल्यं अधरस्पन्दनं दोर्वि-

काम। अयि! त्वमपि न वेत्सि?
इदमिह मदनस्य जैत्रमस्त्रं सहजविलासनिबन्धनं शरीरम्।
अनुचितवरसंप्रयोगशोच्यं, विफलगुणातिशयं भविष्यतीति॥(६)

[मालती वैलक्ष्यं नाटयति।]

लव। अत्थि एदं, णरिन्दवअणाणुरोहिणा अमच्चेण णन्दणस्स पडिवण्णा मालदीत्ति सअलो जणो अमच्चं जुगुच्छेदि (अ)।

माल। [स्वगतं।] कधं उवहारीकिदह्मि तादेण राइणो? (इ)।

काम। आश्चर्यं।

गुणापेक्षाशून्यं कथमिदमुपक्रान्तमथवा,
कुतोऽपत्यस्नेहः कुटिलनयनिष्णातमनसाम्?।
इदं त्वैदंपर्यं यदुत नृपतेर्नर्मसचिवः,
सुतादानान्मित्रं भवतु, स हि मे नन्दन इति॥(७)

---

(अ) अस्त्येतन्नरेन्द्रवचनानुरोधिना अमात्येन नन्दनस्य प्रतिपन्ना मालतीति, सकलो जनोऽमात्यं जुगुप्सते।

(इ) कथमुपहारीकृतास्मि तातेन राज्ञः?

---

(६) इदमिति। इह अत्र इदं मदनस्य जैत्रमस्त्रं जयशीलमायुधरूपं सहजविलासनिबन्धनं नैसर्गिकभावमूलकं शरीरं अनुचितवरस्य संप्रयोगेण शोच्यं शोचनीयं सत् विफलगुणातिशयं विफलं गुणातिशय्यं यस्य तत् भावप्रधाननिर्देशः भविष्यति॥

(७) गुणेति। गुणापेक्षाशून्यं यथायथा गुणमनपेक्ष्य वैवर्ध्यः। कथमिदमुपक्रान्तं आरब्धं एतदनुचितमित्यर्थः। अथवा कुटिलनयनिष्णातमनसां

मात्मानमुदयनाय प्रायच्छत् इत्यादि, तदपि साहसिकमित्य-नुपदेष्टव्यकल्पं, सर्वथा,

राज्ञः प्रियाय सुहृदे सचिवाय कार्य्यात्
दत्त्वात्मजां भवतु निर्वृतिमान् अमात्यः।
दुर्दर्शनेन घटतामियमप्यनेन,
धूमग्रहेण शशिनो विमला कलेव ॥ (८)

मालती। [सास्रं स्वगतं।] हा ताद! तुमम्पि मम णाम एव्वं त्ति सव्वधा जिदं भोअतिह्णाए (ङ)।

अव। चिराइदं भअवदीए, णं भणामि, अक्खुदसरीरो महाभाओ माहवोत्ति (च)।

काम। गम्यते, वत्से! अनुजानीहि माम्।

लव। [जनान्तिकं।] सहि! मालदि! सम्पदं भअवदीए सआसादो, तस्स महाणुभावस्स उग्गमं जाणीमो (छ)।

(ङ) हा तात! त्वमपि मम नाम एवमिति सर्वथा जितं भोगतृष्णया।

(च) चिरायितं भगवत्या, ननु भणामि अक्षतशरीरः खलु महाभागो माधव इति।

(छ) सखि! मालति! साम्प्रतं भगवत्याः सकाशात्, तस्य महानुभावस्य उद्गमं जानीमः। उद्गमम् उत्पत्तिम्।

(८) राज्ञ इति। अमात्यः सचिवः कार्य्यात् कार्य्यवशात् राज्ञो नृपस्य प्रियाय सुहृदे सचिवाय अमात्याय आत्मजां मालतीं दत्त्वा निर्वृतिमान् सुखी भवतु। धूमग्रहेण धूमाकारराहुग्रहेण दर्शनमप्यनर्हेणेत्यर्थः। शशिनः चन्द्रस्य विमला मनोहरा कलेवेति निदर्शना। वार्द्धक्यात् कौरूप्याच्च दुर्दर्शनेन अनेनापि इयं मालती घटतां वर्त्तताम् इयमस्य सहचारिणी भवतु इत्यर्थः। अत्र सममात्रार्थत्वात् सम्भावयोगेऽपि प्रतीयते।

माल । [अपवार्य्य] सहि ! अत्थि मे कोदूहलं ।

लव । [प्रकाशं ।] भअवदि ! को एसो माहवो णाम, जस्स भअवदी णिब्भरगुरुअं पक्खवादं धारेदि ? (ज) ।

काम । अप्रस्ताविकी महती एषा कथा ।

लव । तधावि आचक्खदु, मे भअवदी । पसादं करेदु (झ)

काम । श्रूयतां, अस्ति विदर्भाधिपतेरमात्यः, समस्तधु-र्य्यपदप्रकाण्डचक्रचूडामणिर्देवरातो नाम, यम् अशेषभुवन-मङ्गलीयपुण्यमहिमानम् आत्मनः सतीर्थ्यं पितैव ते जानाति योऽसौ यादृशश्चेति । अपि च ।

व्यतिकरितदिगन्ताः श्वेतमानैर्यशोभिः,
सुकृतविलसितानां स्थानमूर्जस्वलानाम् ।
अकलितमहिमानः केतनं मङ्गलानाम्,
कथमपि भुवनेऽस्मिन् तादृशाः सम्भवन्ति ॥ (८)

माल । सहि ! तं क्खु भअवदीगहिदणामधेअं सव्वदा तादो सुमरेदि (ञ) ।

---

(ज) भगवति । क एष माधवो नाम, यस्य भगवती निर्भरगुरुकं पक्षपातं धारयति ? अस्य कृते इत्यर्थः ।

(झ) तथाप्याचष्टां मे भगवती प्रसादं करोतु ।

(ञ) सखि ! तं खलु भगवतीगृहीतनामधेयं सर्वदा तातः स्मरति ।

---

(८) व्यतिकरितेति । श्वेतमानैः शुभ्रैर्यशोभिर्व्यतिकरितदिगन्ता व्याप्तदिग्विभागाः ऊर्जस्वलानां बलवतां सुकृतविलसितानां पुण्यपरिणामानां स्थानम् अकलितमहिमानः अविदितमाहात्म्याः मङ्गलानां केतनं निवासः उभयत्र विधेयप्राधान्यात् बहुवचनम् । तादृशा महान्त इत्यर्थः । अस्मिन् भुवने कथमपि केनचित् भाग्यवशेनैव सम्भवन्ति । आयासं विना एतादृङ्महतां पुनः प्रादुर्भाव इति भावः ॥

लव। सहि! सम्मं क्खु विज्जाहिगमो किदो त्ति, तक्कालसंवेदिणो मन्तन्ति (ट)।

काम। तत उदयगिरेरिवैक एव
स्फुरितगुणद्युतिसुन्दरः कलावान्।
इह जगति महोत्सवस्य हेतु-
र्नयनवतामुदियाय बालचन्द्रः॥ (१०)

लव। [जनान्तिकं।] सहि! अवि णाम माहवो भवे?

काम। असौ विद्याधारः शिशुरपि विनिर्गत्य भवनात्
इहायातः सम्प्रत्यविकलशरच्चन्द्रमधुरः।
यदालोकस्थाने भवति पुरमुन्मादतरलैः,
कटाक्षैर्नारीणां कुवलयितवातायनमिव॥ (११)

---

(ट) सखि! सम्यक् खलु विद्याधिगमः कृत इति तत्कालसंवेदिनो मन्त्रयन्ते।

---

(१०) तत इति। स्फुरितगुणद्युतिः प्रकाशमानगुणोत्कर्षश्चासौ सुन्दरश्च कलावान् चतुःषष्टिकलाकुशलः नयनवतां चक्षुष्मतां महोत्सवस्य हेतुः इह जगति ततो देवरातात् उदयगिरेः उदयाचलात् बालचन्द्र इव उदियाय उत्पन्न इत्युपमा। चन्द्रेऽपि पूर्वोक्तानि विशेषणानि योज्यानि।

(११) असाविति। विद्याधारः विद्यानिधिः शिशुरपि बालोऽसौ माधवः भवनात् गृहात् विनिर्गत्य गृहादिकं त्यक्त्वा विदेशं गतवान्। सम्प्रति [illegible] अविकलशरच्चन्द्रमधुरः सम्पूर्णशरच्चन्द्रवत्सुन्दर इत्यर्थः। इह अत्र देशे आयातः आगतः। यस्य आलोकस्थाने दर्शनस्थानमार्गे उन्मादतरलैः मत्ततया चपलैः। माधवदर्शनजन्यमदनपीडैव उन्मादः। नारीणां कटाक्षैः अपाङ्गभागैः कुवलयितानि सञ्जातकुवलयानि तारकादित्वादितच् प्रत्ययः।

तदनुतिष्ठाम:। [इत्युत्तिष्ठति।]

माल। [अपवार्य्य।] कधं उवकारीकिदह्मि राअणो तादेण, राआराहणं क्खु तादस्स गुरुअं ण उण मालदी। [सास्रं।] हा ताद! तुमम्पि णाम मम एव्वं त्ति सव्वधा जिदं भोअतिह्णाए। [सानन्दं।] कधं महाकुलप्पभवो वि सो महाणुभावो सुभणिदं विसुमरीए कुदो वा महोदहिं वज्जिअ पारिजादस्स उग्गमोत्ति। अवि णाम तं पुणोवि पेक्खिस्सं (ड)।

लव। अवलोइदे! इदो एहि, एदिणा सोवाणेण ओदराम्ह। (ढ)

काम। [अपवार्य्य।] साधु, सम्प्रति मया तटस्थयैव, मालतीं प्रति निसृष्टार्थदूतीकल्पस्य, लघुकृतो भार:। तथाहि।

वरेऽन्यस्मिन् द्वेष:, पितरि विचिकित्सा च जनिता,
पुराणैरुद्गारैरपि च कथिता कार्य्यपदवी।
स्तुतं तस्याभाव्यं, यदभिजनतो यच्च गुणत:
प्रसङ्गात् वत्सस्येत्यथ विधिविधेय: परिचय: ॥ (११)

[इति निष्क्रान्ता: सर्वे।]

इति मालतीमाधवे धवलगृहो नाम द्वितीयोऽङ्क:।

---

(ड) कथमुपकारीकृतास्मि राज्ञा तातेन, राजाराधनं खलु तातस्य गुरुकं, न पुनर्मालती। हा तात! त्वमपि नाम ममैवमिति, सर्वथा जितं भोगतृष्णया। कथं महाकुलप्रभवोऽपि स महानुभाव: सुभणितं विस्मृतवत्या, कुतो वा महोदधीत्यादि। अपि नाम पुनरपि तं प्रेक्षिष्ये।

(ढ) अवलोकिते! इत इत एतेन सोपानमार्गेणावतराव:।

---

(११) वर इति। अन्यस्मिन् वरे धनी नन्दने द्वेष:, पितरि विचिकित्सा निन्दा च जनिता पुराणवीरोद्गारै: इतिहासवचनै:, शकुन्तलादीनां पितृनिरपेक्षात्मदानवचनै: कार्य्यपदवी कर्मपथ: कथिता च वत्सस्य प्रसङ्गात् अभिजनत:

बुद्ध। किंति तहिं माहवो अणुप्पवेसिदो ? (क)

अव। अज्ज कसणचउद्दसीत्ति, तत्थ भअवदीए सअं मालदी सङ्करघरं गमिस्सदि, तदो चिअ एव्वं सोहग्गं वड्ढदित्ति देवदाराहणणिमित्तं वउलकुसुमावचअं उद्दिसिअ, लवङ्गिआदुदीअं मालदीं, भअवदीएव्व कुसुमाअरुज्जाणं आणइस्सदि, तदो अण्णोण्णदंसणं भोदुत्ति। तुमं उण कहिं पत्थिदा ? (ख)।

बुद्ध। अहं क्खु, सङ्करघरं जेव्व पत्थिदाए पिअसहीए मदअन्तिआए आमन्तिदा, तदो भअवदीए पादवन्दणं करिअ, तहिं जेव्व गच्छामि (ग)।

अव। तुमं क्खु भअवदीए अण्णिं पओअणे णिउत्ता, तत्त को वुत्तन्तो ? (घ)।

बुद्ध। मए क्खु भअवदीए समादेसेण, तासु तासु विस्सम्भकहासु, ईरिसो तारिसोत्ति मअरन्दस्स उवरि पिअसहीए मदअन्तिआए दूरं आरोविदो परोक्खाणुराओ एसो अ से मणोरहो, अवि णाम तं पेक्खामित्ति (ङ)।

---

(क) किमिति तत्र माधवोऽनुप्रेषितः ? ।

(ख) अद्य कृष्णचतुर्दशीति, तत्र भगवत्या स्वयं मालती शङ्करगृहं गमिष्यति, ततः खिल एवं सौभाग्यं वर्धत इति, देवताराधननिमित्तं बकुलकुसुमावचयमुद्दिश्य, लवङ्गिकाद्वितीयां मालतीं भगवत्येव कुसुमाकरोद्यानमानेष्यतीति, ततोऽन्योन्यदर्शनं भवत्विति। त्वं पुनः क्व प्रस्थिता ?

(ग) अहं खलु शङ्करगृहमेव प्रस्थितया प्रियसख्या मदयन्तिकया आमन्त्रिता, ततो भगवत्याः पादवन्दनं कृत्वा तत्रैव गच्छामि।

(घ) त्वं खलु भगवत्या अन्यस्मिन् प्रयोजने नियुक्ता, तत्र को वृत्तान्तः ? मकरन्दस्य मदयन्तिकापरिचयोऽपि किं तथा वृत्तः ।

(ङ) मया खलु भगवत्याः समादेशेन तासु तासु विश्रम्भकथासु, ईदृश-

अव। साहु बुद्धरक्खिदे! साहु। (ञ)

बुद्ध। एहि गच्छम्ह। (ट)

[ इति परिक्रम्य निष्क्रान्ते प्रवेशकः। ]

[ ततः प्रविशति कामन्दकी। ]

तथा विनयवत्यापि मया मालत्युपायतः।
नीता कतिपयाहोभिः सखीविस्रम्भसेव्यताम्॥ (१)

सम्प्रति। व्रजति विरहे वैचित्त्यं, नः प्रसीदति सन्निधौ,
रहसि रमते, प्रीत्या दायं ददात्यनुवर्त्तते।
गमनसमये कण्ठे लग्ना, निबध्य निबध्य माम्,
सपदि शपथैः प्रत्यावृत्तिं प्रणम्य च याचते॥ (२)

इदञ्च साधीयस्तावत् सम्प्रत्यात्मनिबन्धनम्।

---

श्लाघ्य इति मकरन्दस्योपरि निबद्धया मदयन्तिकाया दूरमारोपितः परीवानुराग एव चास्या मनोरथः, अपि नाम तं प्रेक्षे इति? अस्याः मदयन्तिकायाः। तम् मकरन्दम्।

(ञ) साधु बुद्धरक्षिते! साधु।

(ट) एहि गच्छावः।

---

(१) तथेति। मया तथा उपायतः साहजोपायं विधाय ल्यब्लोपे पञ्चमी। विनयवत्यपि विनीतापि मालती कतिपयाहोभिः कियद्भिर्दिवसैः सखीविस्रम्भसेव्यतां सखीभिर्वर्त्तिकादिभिरिव विश्वस्तं यथा तथा सेव्यतां उपचारार्हतां नीता प्रापिता कतिचिद्दिनैरेव सा मालती सखीवत् विश्वासस्थानत्वं प्रापिता इत्यर्थः॥

(२) व्रजतीति। नः अस्माकं विरहे वैचित्त्यं शून्यमनस्कत्वं व्रजति गच्छति। अस्माकं सन्निधौ प्रसीदति प्रसन्ना भवति। रहसि विजने रमते उत्कण्ठासहितं माधवकथा-सुहृद्भिः अस्माभिः सहेत्यर्थः। प्रीत्या हर्षेण दायमुत्तरं ददाति अनुवर्त्तते अस्माकं वचः न लङ्घति। तथा गमनसमये कण्ठे लग्ना बाहुभ्यां कण्ठं धृत्वेत्यर्थः। मां निबध्य निबध्य आभीक्ष्ण्ये द्विरुक्तिः। सपदि तत्क्षणात् शपथैर्दिव्यैः प्रणम्य नमस्कृत्य च प्रत्यावृत्तिं पुनरागमनं याचते इत्येतत् सर्वं चेष्टितं शुभाय इतिभावः।

आकुन्तलादीनितिहासवादान् प्रस्तावितानन्यपरैर्वचोभि:।
श्रुत्वा मदुत्सङ्गनिवेशिताङ्गी चिराय, चिन्तास्तिमितत्वमेति॥ (१)

तदद्य माधवममत्समुत्तरमुपक्रमिष्ये।
[ नेपथ्याभिमुखम्। ] वत्से ! इत इतः।

[ ततः प्रविशति मालती लवङ्गिका च। ]

माल। [स्वगतम्। ] कथं उवहारोकिदम्हि। [इत्यादि पूर्वोक्तं पठति। ]

लव। सहि ! एसो क्खु महुर-महु-रसोद्दाम-मञ्जरी-कवलण-केलि-कल--कोइल--कुल--कोलाहलाउलिद--सहआर-सिहरुड्डीण-चडुल-चञ्चरीअणिअर-व्वदिकरहलिद-दल-कराल-चम्प-काहिवास-मणोहरो, मराल-मंसल-जहण-परिणाहुत्तुङ्ग-थणत्थरोरुभर विसंठुल-क्खलिद-चलण--संचार-मसिण-गमणोव-णीद-सिअसीअर-सुहाबिंदुरज्जन्त-मुह--मुह--चन्दणाअमाण-सीअलप्फंसो, तुमं परिस्सअदि कुसुमाअरुज्जाणमारुदो, ता पविसम्ह (ठ) [ इति परिक्रम्य प्रविशतः। ]

---

(ठ) सखि ! एष खलु मधुरमधुरसोद्दाममञ्जरीकवलनकेलिकलकोकिल-कुलकोलाहलाकुलितसहकारशिखरोड्डीन-चटुलचञ्चरीकनिकरव्यतिकरोद्दलितदल-करालचम्पकाधिवासमनोहरो, मरालमांसलजघनपरिणाहोत्तुङ्गस्तनस्तबकभर-विसंष्ठुलस्खलितचरणसञ्चारमसृणगमनोपनीतस्वेदशीकरसुधाबिन्दूयमानमुखमुख-चन्द्रचन्दनायमानशीतलस्पर्शः त्वां परिष्वजति कुसुमाकरोद्यानमारुतः तत् प्रविशाव:। अत्रैव खलु कुसुमाकरोद्यानमारुतस्त्वां परिष्वजतीति सम्बन्धः।

---

(१) अन्यपरैः वचोभिः प्रस्ताविताम् कथाप्रसङ्गेन उत्थापिताम् आकुन्तला-दीन् इतिहासप्रबन्धान् श्रुत्वा मदङ्कनिवेशितशरीरा सती चिरकालं त्वाम् चिन्ता-स्तम्भितत्वमिव।

काम। [ मालतीं परिष्वज्य। ] अयि! विरम, निःसहासि जाता। तथाहि।

स्खलयति वचनं ते, संश्रयत्यङ्गमङ्गम्
जनयति मुखचन्द्रोद्भासिनः स्वेदबिन्दून्।
मुकुलयति च नेत्रे सर्वथा सुभ्रु! खेद-
स्त्वयि विलसति तुल्यं वल्लभालोकनेन॥ (८)

[ मालती लज्जते। ]

लव। सोक्कम्पं भअवदीए आअक्खिदम्। (त)

माध। हृदयङ्गमः परिहासः।

काम। तदाख्यतां, किञ्चिदाख्येयमाख्यातुकामास्मि।

[ सर्वा उपविशन्ति। ]

काम। [ मालत्याश्चिबुकमुन्नमय्य। ] शृणु विचित्रमिदं, सुभगे!।

माल। अवहिदम्हि। (थ)

काम। अस्ति तावदेकदा प्रसङ्गतः कथित एव मदमाधवाभिधानः कुमारो यस्त्वामिव मामकीनस्य मनसो द्वितीयं निबन्धनम्।

लव। सुमरामो। (द)

(त) सोत्कम्पं भगवत्याख्यातम्।
(थ) अवहितास्मि। (द) स्मरामः।

अनुचयं सम्यक् मोचनं वेत्र इति यावत्। तेन अयं वराः कुसुमा सुकुमा यस्य स यदनः मोचकुसुमं तस्य कम्बरः समूहः चित्ताकारी चतुरिकयेति।

(८) स्खलयतीति। हे सुभ्रु! शोभनभ्रुयुते! मालति! खेदः क्लमः ते तव वचनं स्खलयति वाक्यस्खलनं करोति अङ्गमङ्गं प्रत्यवयवं संश्रयति आश्रयते मुखचन्द्रं उद्भासयन्तीति तान् स्वेदबिन्दून् घर्मजलकणान् जनयति नेत्रे च मुकुल-

काम। स खलु मन्मथोद्यानयात्रादिवसात्प्रभृति दुर्मनायमानः, परवानिव शरीरोपतापेन।

यदिन्दावानन्दं, प्रणयिनि जने वा, न भजते,
व्यनक्त्यन्तस्तापं तदयमतिधीरोऽपि विषमम्।
प्रियङ्गुश्यामाङ्गप्रकृतिरपि, चापाण्डुमधुरम्
वपुः क्षामं क्षामं वहति, रमणीयश्च भवति॥ (९)

लव। एवम्पि तस्सिं अवसरे भअवदीं तुवराअन्तीए, अवलोइदाए उदीरिदं आसि, जधा अस्सत्थसरीरो माहवोत्ति (ध)।

काम। यावदमृणवं, मालत्येवास्य मन्मथोन्मादहेतुरिति, ममापि स एव निश्चयः।

अनुभवं वदनेन्दुरुपागमस्थियतमेव यदस्य महात्मनः।
क्षुभितमुत्कलिकातरलं मनः पय इव स्तिमितस्य महोदधेः॥१०॥

---

(ध) एवमपि तस्मिन्नवसरे भगवतीं त्वरयन्त्या अवलोकितयोदीरितमासीत्, यथा अस्वस्थशरीरो माधव इति।

---

यति निमीलयति सर्वथा सर्वप्रकारेण बहुभाषीकनेन माधवदर्शनेन तुल्यं निर्विशेषं यथा तथा विकसति। श्रवणेन माधवकर्णकदर्शनेन त्वम् अतितरां खिद्यसि माधवोऽपि मालतीदर्शनेन खिन्नोऽजातः। तेनोभयोः साम्यावस्था उक्ता।

(९) यदिति। इन्दौ चन्द्रे, प्रणयिनि जने प्रियतमजने वा यद् यस्मात् आनन्दं हर्षं न भजते तस्मादयमतिधीरो विवेकशीलोऽपि विषमं अन्तस्तापं व्यनक्ति प्रकाशयति। एतदाकारदर्शने अन्तर्गततापः सुखानुमेय इत्यर्थः। प्रियङ्गुश्यामाङ्गप्रकृतिरपि प्रियङ्गुफलवत् श्यामवर्णा तद्वत् शीतलप्रकृतिर्माधवोऽपि आपाण्डु सम्यक् पाण्डुवर्णमत एव मधुरं सुन्दरं वपुः क्षामं क्षामं अतिकृशम् इति आभीक्ष्ण्ये द्विर्भावः। वहति धारयति तथा रमणीयश्च भवति। विरहावस्थायां माधवमवलोक्य पूर्वापेक्षया नूतन इव शोभते।

(१०) अनुभवमिति। वदनेन्दुर्मुखचन्द्रः माधवस्येत्यर्थः। अनुभवं विना

माल। [स्वगतं।] अदिदुक्करं करेदि। (न)

काम। तदेवं प्रकृत्या सुकुमारः कुमारः कदाचिदपि अन्यथ अपरिक्लिष्टपूर्वस्तपस्वी, यतोऽधुना मन्मथेन मरणमपि अनुभवितुम्।

माल। [जनान्तिकं।] सहि! अत्तणो कारणादो तस्स सव्वलोआलङ्कारभूदस्स, किम्पि आसङ्कन्तीए भअवदीए भीदाविदम्हि, ता किं दाणिं एत्थ पडिवज्जिस्सं (प)।

माध। दिष्ट्यानुकम्पितोऽस्मि भगवत्या।

लव। भअवदी एव्वंवादिणीत्ति आअक्खीअदि, अज्जा-णम्मि भट्टिदारिआ, मअणासणरक्खामुहसमुत्तमअणस्स, तस्स ज्जेव्व बहुसो अणुभूददंसणा भविअ, रविकिरणासिलिट्ठ-मुह-कमलिणी-कन्द-सुन्दरावअव-सोहा विभाविदाणङ्ग-वेअणा-विअदर-रमणीआवि, परिअणं दूणेदि। णाभिणन्ददि केलि-कलाओ, केवलं कमलावमाण-कन्तहत्थ-पल्हत्थ-गण्ड-मण्डला दिअसाइं गमेदि। अविअ। विअसिआरविन्द-मअरन्द-णिस्सन्द-सुन्दरेण, दर-दलिअ-कुन्द-माअन्द-मडु-बिन्दु-सन्दोह-वाहिणा, मअणुज्जाणेरन्त-मारुदेण उत्तम्मदि।

---

(न) अतिदुष्करं करोति।

(प) सखि! आत्मनः कारणात्तस्य सर्वलोकालङ्कारभूतस्य, किमपि आशङ्कमानया भगवत्या भीतावितास्मि, तत् किमिदानीमत्र प्रतिपत्स्ये।

(फ) भगवती, एवं वादिनी इति आख्यायते, अद्यापि भर्तृदारिका, मदना-[illegible], तस्यैव बहुशोऽनुभूतदर्शना भूत्वा, रविकिरणाश्लिष्टमुख-कमलिनीकन्दसुन्दरावयवशोभा विभाविताङ्गवेदना[illegible]रमणीयापि, परिजनं दुनोति नाभिनन्दति केलिकलाः, केवलं [illegible] दिवसानि गमयति। अपिच। विकसितारविन्दमकरन्द[illegible]बिन्दुसन्दोहवाहिना

अज्ज तस्सिं कामादिअहे णिअमहूसवाणुरूव-दंसण-पडिवण्ण-रूवस्स भअवदो कामस्स विअ, काम-काणणालङ्कार-धारिणो तस्स, विविह-विब्भमाहिरामं, अणुरूवाणुराआणुबन्ध-महग्घीकिद-जोव्वणारम्भं अवलोइदविणिवाद-वअणावसर-क्खित्त-माणविअ-तुवरन्त-कोदूहलं समुल्लसिद-सज्झस-त्थम्भ-मन्थरावअवपडिबन्ध-सेअ-पुलअ-उक्कम्प-सुन्दरं, आणन्दिद-सहीअणं पिअसहीए परप्परावलोअणसुहं समासादिदं, तदो पहुदि, सविसेस-दूसहायास-विजिअमाणुद्दामदेहदाह-दारुणं दसापरिणामं अणुभवन्ती, मुहुत्तमेत्तमप्पत्त-पुण्णचन्दोदआ बालकमलिणी विअ पम्मलाअदि ।

तहाविअ, मुहुत्तमेत्त-हिअअ-विणिहिद-णिअ-अङ्ग समागमा, णिब्भर सलिलासार-सिच्चमाणिव्व मेदणी सीदलाअदि त्ति जाणामि । जेण पप्फुरिद-कन्त दसण-च्छदुच्छलन्त-दन्त-मुत्तिआवलिकन्ति सविसेस-सोहिदं, णिरन्तरुल्लसिद-पुलअ-पम्हल-कवोलवोलन्त-संददाणन्द-बाहत्थ-वणं ईसि-विवलिद-णिप्पन्द-मन्दतारत्ताव-मसिणमउलाअन्त णेत्तणीलुप्पलं, पविरलुब्भिण्ण सेअजलबिन्दु सुन्दरललाटपट्ट ववच्छेदामणोहरं मुहपुण्डरीअमुव्वहन्ती, विअट्ठ-सहअरीविअ-संवदंद-कोमारभावा भोदि। किंअ। उद्दाम-ससिमण्डलविडम्बणुम्मिदपण्डत्तिणीसन्दअन्दमणिहार-धारिणी

---

मदनोद्यानवर्णनमानावतेन दर्शयति । यथ तस्मिन् कामादिवसे, निजमहोत्स-वानुरूपदर्शनप्रतिपन्नरूपस्य भगवतः कामस्येव, कामकाननालङ्कारधारिणः तस्य, विविध विभ्रमाभिरामम् अनुरूपानुरागानुबन्धमहार्घीकृतयौवनारम्भम् अवलोकितविनि-पातवचनावसरक्षिप्तमानवितरमाणवकौतूहलं, समुल्लसितसाध्वसस्तम्भमन्थराव-

कामन्दकीमाधवौ । [ सभयं । ]—हद्ध पशुना हतः

इतराः । अच्चाहिदं ! अच्चाहिदं ! (ष)

कामन्दकीमाधवौ । [सहर्षं ।]—प्रमथितश्च दंष्ट्रायुधः ॥ (१८)

इतराः । [ सानन्दं । ] दिट्ठिआ परिहदं दुज्जादं । (स)

काम । [ साकूतं । ] कथं व्यालनखरप्रहारनिःसृतरक्तप्रवाहः, स्तिमिततलनिषण्णखड्गलतावष्टम्भनिश्चलः, संभ्रान्तमदयन्तिकावलम्बितः ताम्यतीव वत्सो मे मकरन्दः ।

इतराः । हद्धी ! हद्धी ! गाढप्पहारदाए किलम्मदि महाभाओ (ह) ।

माध । कथं प्रमुग्ध एव । [ कामन्दकीं प्रति । ] भगवति ! मां परित्रायस्व ।

काम । अतिकातरोऽसि । तदेहि तावत्पश्यावः ।

[ इति परिक्रम्य निष्क्रान्ताः सर्वे । ]

इति मालतीमाधवे शार्दूलविद्रावणो नाम तृतीयोऽङ्कः ।

---

(ष) अत्याहितमत्याहितम् ।

(स) दिष्ट्या प्रतिहतं दुर्जातम् ।

(ह) हा धिक् ! हा धिक् ! गाढप्रहारतया क्लाम्यति महाभागः ।

---

पातितान् तेन व्याघ्रेण अवपातितान् गृहीतान् कुतोऽपि पुरुषान् अभिनतायुधः प्रतिरुध्य सहसैव एष आगत्य मकरन्दः मध्ये स्थितः । तथा हद्ध च यथा तथा पशुना व्याघ्रेण हतः ताडितः मकरन्द इति भेदः । दंष्ट्रायुधो व्याघ्रश्च प्रमथितो व्यापादितः ।

# चतुर्थोऽङ्कः ।

ततः प्रविशतो मदयन्तिकाव्याघ्रविक्रियाश्रमक्लान्तौ मूर्च्छितौ माधवमकरन्दौ, तदनुगता कामन्दकी मालती बुद्धरक्षिता च ।

मद । पसीद भअवदि ! परित्ताहि परित्ताहि मदअन्तिआणिमित्त-संसइदजीविदं आवण्णजणाणुकम्पिणं महाभाअं (क) ।

इतरा: । हद्धी ! हद्धी ! किं दाणिं अह्मेहिं एत्थ पेक्खिदव्वं । (ख)

कामन्दकी । [ उभौ कमण्डलूदकेन सिञ्चति । ] ननु भवत्य: पटाञ्चलेन वत्सौ वीजयन्तु ।

[ मालत्यादयस्तथा कुर्वन्ति । ]

मक । [ समाश्वस्यावलोक्य च । ] वयस्य ! कातरोऽसि, किमेतत्, ननु स्वस्थ एवास्मि ।

मद । [सहर्षं । ] अम्महे ! पडिबुद्धं दाणिं मअरन्द-पुण्णिमा चन्देण (ग) ।

माल । [माधवस्य ललाटे हस्तं दत्त्वा । ] सहि लवङ्गिए ! दिट्ठिआ वड्ढसि, जं भणामि, पडिबुद्धो ज्जेव्व दे पिअवअस्सो, पडिवण्णचेअणो महाभाओ मअरन्दोत्ति (घ) ।

---

(क) प्रसीद भगवति ! परित्रायस्व, मदयन्तिकानिमित्तसंशयितजीवितमापन्नजनानुकम्पिनं महाभागम् ।

(ख) हा धिक् ! हा धिक् ! किमिदानीमस्माभिरिह प्रेक्षितव्यम् ।

(ग) आश्चर्यं ! प्रतिबुद्धमिदानीं मकरन्दपूर्णिमाचन्द्रेण ।

(घ) सखि लवङ्गिके ! दिष्ट्या वर्धसे यद् भणामि प्रतिबुद्ध एव ते प्रियवयस्य: प्रतिपन्नचेतनो महाभागो मकरन्द इति ।

[ पुनर्मकरन्दमेव सस्नेहमवलोकयति । ]

काम । [स्वगतम् । ] रमणीयोर्जितं * हि मदयन्तिकामकरन्दयोर्दैवादस्य दर्शनम् । [प्रकाशम् । ] वत्स मकरन्द ! कथं पुनरायुष्मानस्मिन्नवसरे मदयन्तिकाजीवितत्राणशोभी भगवता दैवेन सन्निधापितः ।

मक । अद्याहमन्तर्नगर एव काञ्चिद्वार्त्तामुपश्रुत्य, माधवस्य चित्तोद्वेगमधिकमाशङ्कमानस्त्वरितमवलोकितानिवेदितकुसुमाकरोद्यानवृत्तान्तः, परापतन्नेव शार्दूलावस्कन्दगोचरतामेतामभिजातकन्यकामभ्युपपन्नवानस्मि ।

[ मालतीमाधवौ विलज्जतः † । ]

काम । [ स्वगतम् । ] इत्थेन खलु मालतीप्रदानेन भवितव्यम् । [प्रकाशम् । ] वत्स माधव ! दिष्ट्या सुहृद्वध्वा वर्द्धितोऽसि मालत्याः, तदयमवसरः प्रीतिदायस्य ‡ ।

माध । भगवति ! इयं हि ।

यद् व्यालम्बितसुहृत्प्रमोदमुग्धं
सौजन्याद्विहितवती गतव्यथं माम्

---

* कर्म्मणोपपन्नत्वेन रमणीयम् । शार्दूलनाशेन उपकारपूर्वकमुपपन्नत्वादूर्जितं शक्तिमयम् । आयुष्मानिति शब्देन वाच्यो वाच्यः प्रमाणयः । इति भरतः ।

† उद्यानवृत्तान्तो मालतीमदयन्त्युपरोपक्रमः । परापतन्नागच्छन् । अवस्कन्दोऽभिक्रमः । अभिजाता कुलीना । तथा चाभिजातत्वेन मदुपकारं ज्ञास्यतीति भावः । आभिजात्येन ज्ञानं च तथाविधाचारादिना । अभ्युपपन्नवानु-कम्पावानहम् । अभ्युपपत्तिः प्राप्तिः । विलज्जतः । परस्परं प्रकाशिताभावदर्शनेति भावः ।

‡ प्रीतिदायस्य पारितोषिकदानस्य ।

(१) यद्यस्मात् शार्दूलेन जिघांसुना अभिहतो यः सुहृत् बान्धवः तस्य यः

तत्कामं प्रभवति पूर्णपात्रवृत्त्या
स्वीकर्तुं मम हृदयञ्च जीवितञ्च ॥ १ ॥

लव । पडिच्छिदो क्खु णो पिअसहीए अअं पसादो (ञ)

मद । [स्वगतम्] जाणादि महाभाअधेओ जणो अवसरे गुरुअरमविअं * भणिदुम् (ट) ।

माल । [स्वगतम् ।] किं णाम मअरन्देण उव्वेअका-रणं सुदं भविस्सदि ? (ठ) ।

माध । वयस्य ! का पुनर्मामाधिकोधे गहेतुर्वार्त्ता † ?

[प्रविश्य पुरुषः ।] वत्से मदयन्तिके ! भ्राता ते ज्यायान् अमात्यनन्दनः समादिशति, अद्य परमेश्वरेण अस्मद्भवन-मागत्य, भूरिवसोरुपरि परं विश्वासमभ्यासञ्च प्रसादमाविष्कु-र्वता, स्वयमेव प्रतिपादिता मालती, तदेहि सम्भावयामः प्रमोदमिति ‡ ।

---

(ञ) प्रतीष्टः खलु नः प्रियसख्या अयं प्रसादः ।

(ट) जानाति महाभागधेयो जनोऽवसरे गुरुतरमपीदं भणितुम् ।

(ठ) किं नाम मकरन्देन उद्वेगकारणं श्रुतं भविष्यति ।

---

प्रसीदः येन मुग्धं मूर्च्छितम् मां जीवनात् गतप्रायं प्रत्यावर्तनेन विहितवती चकार, तत् तस्मात् पूर्णपात्रवृत्त्या यथाऽसौ दिव्यपूर्णपात्ररूपेण मम हृदयञ्च जीवितञ्च स्वीकर्तुमात्मसात्कर्तुं कामं यथा तथा प्रभवति समर्था भवति ।

* गुरुतरमपीदं भणितुम् ।

† मकरन्देन काञ्चिद्वार्त्तामुपश्रुत्येति मदुच्छ्वसितमुद्वहमानः पृच्छति । वय-स्येति ।

‡ ज्यायान् ज्येष्ठः । परमेश्वरो राजा । विश्वासम् अभेदम् । सम्भावयामः कारयामः । उत्सवपूर्वको हर्षः प्रमोदः ।

मक। वयस्य! सेयं वार्त्ता।

[ मालतीमाधवौ वैलक्ष्यं नाटयतः। ]

मद। [ मालतीं सहर्षमालिङ्ग्य। ] सहि मालदि! तुमं क्खु एक्कणअरणिवासेण सहपंसुकीलणादो पहुदि मे पिअसही आसि बहिणिआ अ, सम्पदं उण णो घरस्स मण्डणं जादासि (ड) *।

काम। वत्से मदयन्तिके! दिष्ट्या वर्द्धसे भ्रातुर्मालतीलाभेन।

मद। भअवदि! तुम्हाणं आसिसां प्पहावेण। लवङ्गिए! फलिदा णो मणोरहा तुम्हाणं लाहेण (ढ) †।

लवं। सहि! किं अम्हाणम्पि अत्थि मन्तिदव्वं (ण)।

मद। सहि बुद्धरक्खिदे! दाणिं विवाहमङ्गलं समा-अरेम्ह। (त)

बुद्ध। सहि! एहि गच्छम्ह। (थ) [ इत्युत्तिष्ठतः। ]

---

(ड) सखि मालति! त्वं खलु एकनगरनिवासेन सहपांशुक्रीडनात् प्रभृति मे प्रियसखी आसीर्भगिनिका च, साम्प्रतं पुनर्नो गृहस्य मण्डनं जातासि।

(ढ) युष्माकमाशीःप्रभावेण। सखि लवङ्गिके! फलिता नो मनोरथा युष्माकं लाभेन।

(ण) सखि! किमस्माकमप्यस्ति मन्त्रयितव्यम्।

(त) सखि बुद्धरक्षिते! इदानीं विवाहमङ्गलं समाचरावः।

(थ) सखि! एहि गच्छावः।

---

* अद्य गृहस्य पूर्णविभवासीति भावः।

† णोशब्दोऽस्माकमित्यर्थे निषेधे च तुल्यरूप इति निषेधोऽत्र न कुरुते। नात एव दीर्घाभावः। भ्रातुरित्यादि।

लव। [जनान्तिकम्।] भअवदि! जहा एदे हिअअ-भरिदुव्विसत्तविब्भमाणन्द-सुन्दरा-दोलिद-धीरत्तण-मणोहरा, पहुत्यन्ति मदअन्तिआमअरन्दाणं दरदलिदणीलुप्पलदाम-सरिच्छा कडक्खविक्खेवा तह तक्केमि मणोरहणिव्वुत्तसम्बन्धा एदे त्ति। (८)

काम। [विहस्य।] ननु इमौ विलोकनेन मानसं मुहुर्मुहुः प्रमोदमनुभवतः।

तथाहि। ईषत्तिर्य्यग्वलितविषमं कुञ्चितप्रान्तमेतत्
प्रेमोद्भेदस्तिमितलुलितं किञ्चिदाकुञ्चितभ्रु।
अन्तर्मोदानुभवमसृणं स्तब्धनिष्कम्पपक्ष्म
व्यक्तं शंसत्यचिरमनयोर्दृष्टमाकेकराक्षम्॥ (९)

---

(८) भगवति! यथैते हृदयभरितोद्दामविभ्रमानन्दसुन्दरान्दोलितधीरत्व मनोहराः परिवर्तन्ते मदयन्तिकामकरन्दयोर्दरदलितनीलोत्पलदामसदृशाः कटाक्षविक्षेपाः तथा तर्कयामि मनोरथनिर्वृत्तसम्बन्धावेताविति।

---

(९) ईषदिति। ईषत् तिर्य्यग्वलितविषमं ईषत् अल्पं तिर्य्यक् वलितेन विषमं किञ्चित् वक्रिमभावापन्नं कुञ्चितप्रान्तं कुञ्चितो मुद्रितः प्रान्तः प्रान्तभागः यस्य तत् प्रेमोद्भेदस्तिमितलुलितं प्रेमोद्भेदेन अनुरागोदयेन स्तिमितं निश्चलं स्थिरमित्यर्थः। अतएव लुलितं मनोहरमित्यर्थः। किञ्चिदाकुञ्चितभ्रु किञ्चिदाकुञ्चिते ईषन्मिते भ्रुवौ यत्र तत् ईषत् सङ्कुचितं तदनयोर्नान्वीतिभावः। अन्तर्मोदानुभवमसृणं अन्तर्मोदस्य आन्तरिकहर्षस्य अनुभवेन ज्ञानेन मसृणमनुल्वणं, स्तब्धनिष्कम्पपक्ष्म स्तब्धेन स्थाणुवत्निश्चलभावेन निष्कम्पानि पक्ष्माणि यत्र तत् आकेकराक्षं आकेकरे (ट्यारा) इति प्रसिद्धाक्षे अक्षीणि यत्र तत् अनयोर्युवयोर्दृष्टं परस्परदर्शनं अचिरं झटिति व्यक्तं स्फुटं मनोगतं प्रमोदं शंसति कथयतीवेति प्रतीयमानोत्प्रेक्षा। अनयोः परस्परदर्शनसुखपारवश्येन स्तम्भितत्वादिना सुखव्यञ्जकानुभवेन च प्रेमातिशय्यं भवति।

[ नेपथ्ये। ] भअवदि कामन्दइ! एसा भट्टिणी विण्णवेदि. जधा मालदीं घेत्तूण तुरिदमाअच्छदु त्ति (प)।

काम। वत्से! उत्तिष्ठ। [ सर्वे उत्तिष्ठन्ति। ]

[ मालतीमाधवौ सकरुणानुरागमन्योन्यमवलोकयतः। ]

माध। [ स्वगतम्। ] कष्टमेतावती लोकयात्रा मालत्या समं माधवस्य, अहो नु खलु भोः।

सुहृदिव प्रकटय्य सुखप्रदः प्रथममेकरसामनुकूलताम्।
पुनरकाण्डविवर्त्तनदारुणो विधिरहो विशिनष्टि मनोरुजम्॥७॥

माल। [ स्वगतम्। ] महाभाअ! लोअणाणन्द! एत्तिअं दिट्ठोसि। (फ)

लव। हद्धी! हद्धी! सरीरसंसअं जेव्व णो पिअसही आरोविदा अमच्चेण (ब)।

माल। [स्वगतम्] परिणदं दाणीं मे जीविदतिह्णाए फलम्।

---

(प) भगवति कामन्दकि! एषा भट्टिनी विज्ञापयति यथा मालतीं गृहीत्वा त्वरितमागच्छतु इति।

(फ) महाभाग लोचनानन्द! एतावद्दृष्टोऽसि।

(ब) हा धिक् हा धिक् शरीरसंशयमेव नः प्रियसखी आरोपिता अमात्येन।

---

(७) प्रथमम् आदौ एकरसां निरन्तरां अनुकूलतां आनुकूल्यं सुहृदिव बन्धुः इव प्रकटय्य प्रकाश्य सुखप्रदः सुखदायी अहो! आश्चर्यम् विधिः पुनः पश्चात् अकाण्डे अकस्मात् अर्द्धविवर्त्तनं दशापरिवर्त्तनं अमीतिरिव: तेन दारुणः कठिनः सन् मनसः चित्तस्य रुजम् व्यथां विशिनष्टि प्रकर्षं जनयतीत्यर्थः।

अपि च । उल्लोल-वल्गित-कपाल-कण्ठमाला-

सङ्घट्ट-क्वणित-कराल-किङ्किणीकः ।

पर्य्याप्तं मयि रमणीयडामरत्वम्,

सन्धत्ते गगनतलप्रयाणवेगः ॥ (३)

तथाहि ।

विष्वग्वृत्तिर्जटानां प्रचलति निविडग्रन्थिनद्धोऽपि भारः,

संस्कारज्ञानदीर्घं पटु रटति लताहतिखट्वाङ्गघण्टा ।

---

भावात् तद्गतचित्तत्वेनेत्यर्थः आत्मानं चात्मस्वरूपं पश्यामि तत विषयज्ञानस्यात्मज्ञान- नाश्यत्वादिति भावः । नाडीनामिडापिङ्गलादीनां हृदयकमलस्य वायुपूरणरोधा- जनितः पाञ्चभौतिकशरीरस्य पञ्चात्मतापत्तेर्यस्मात् पञ्चात्मतानां पृथिव्यप्तेजोवाय्वाका- शानां यदाखर्वं तस्मात् अयमात्मा नभसा अदृश्यमानमूर्त्तिर्मा तथा च पुरीभावि नभोऽम्भोमुचः आकाशस्थमेघान् विघटयन्तो द्विधाकुर्वन्तीति यावत् । चञ्चलीत्यर्थः ।

(३) उल्लोलेति । उल्लोलायाश्चञ्चलाया वेगगमनादित्यर्थः । अतएव वल्गि- ताया नर्त्तिताया कपालकण्ठमालाया नृकपालरूपस्रज इत्यर्थः । सङ्घट्टेन परि- मर्द्देन क्वणिता मुखरा शब्दायितेति यावत् । कराला भीषणा किङ्किणी क्षुद्र- घण्टिका यस्मात् येन तेन वा । तत्र कणितेत्यत्र कर्म्मणि क्तः । अपरत्र तारकादि- त्वादितच्प्रत्यय इति भेदः । गगनतलप्रयाणवेगः आकाशोत्पतनजन्यवेगो मम कर्त्ता । मयि रमणीयडामरत्वं भीषणत्वं एकत्र कपालेनान्यत्र कपालकुण्डलेन रमणीयत्वमित्यर्थः । पर्य्याप्तं नितान्तं सन्धत्ते जनयति । अत्रैकस्य कपालस्य पतन- जननाभ्यां विभावनाविशेषोक्तिरूपालङ्कारद्वयं व्यज्यते । कपालरूपकारणासत्त्वेऽपि भीषणत्वरूपकार्योत्पत्त्या विभावना तस्य च सत्त्वेऽपि भीषणत्वरूपकार्यानुत्पत्त्या विशेषोक्तिः । तयालङ्कारद्वयं कपालकण्ठमालेतिरूपकेण सङ्कुलमिति रमणत्वद्वार- जनक सङ्करः ।

(४) विष्वगिति । निविडग्रन्थिनद्धोऽपि दृढग्रन्थियुक्तोऽपि विष्वग्वृत्तिर्वात- वेगात् चलितसंस्थानभेदः जटानां भारः जटाकलापः प्रचलति, लताहति- खट्वाङ्गघण्टा वारंवारं स्पन्दमानस्य खट्वाङ्गस्य चापभेदस्य घण्टा संस्कारेण आर्त्तनादिवेगनुपेशा वेगाख्यसंस्कारेण वा । यः ज्ञानः ध्वनः तेन दीर्घमविच्छ

किञ्च । अतिमुक्तमदयन्थितकेशरावली-
सततादिवाससुभगार्पितस्तनम् ।
अपि कर्णजाहविनिवेशिताननः
प्रियया तदङ्गपरिवृत्तमाप्नुयाम् ॥ (९)

अथवा । दूरे तावदेतत् इदमेव प्रार्थये ।

सम्भूयेव सुखानि चेतसि परं भूमानमातन्वते,
यत्रालोकपथावतारिणि रतिं प्रस्तौति नेत्रोत्सवः ।
यद् बालेन्दुकलोच्चयादवचितैः सारैरिवोत्पादितम्,
तत्पश्येयमनङ्गमङ्गलगृहं भूयोऽपि तस्या मुखम् ॥ (१०)

यत्सत्यमधुना तत्सन्दर्शनेनातिस्वल्पोऽपि न विशेषः ।

---

(९) अतीति । अतिमुक्ताया माधव्या मुक्तारहितायाश्च मदयन्तिकाया उभ-
यत्र सम्यङ्निर्मितायाः केशरावल्याः वारभेदस्य मालायाश्च यः सततमधिवासः देह-
नियतावस्थानं अन्यत्र यः गाढ़परिमलः तेन सुभगं यथा भवति तथा उभयथैव
रमणीयमित्यर्थः । अर्पितस्तनं न्यस्तकुचं तस्याः अङ्गपरिवृत्तं अङ्गस्य परिवर्त्तनं एकत्र
शयनादिनाऽन्यत्र पार्श्वपरिवर्त्तनं अहं कर्णजाहे कर्णमूले विनिवेशिताननः न्यस्त-
मुखः सन् प्रियया सह आप्नुयां लभेयं ममापि तद् भवतु इत्यर्थः । प्रियाकर्ण-
मूले मुखं न्यस्य तदङ्गपरिवर्त्तनजन्यसुखदुःखोभयविधाकारमव्यक्तरसं अनुभविष्या-
मीति भावः ।

(१०) सम्भूयेति । सुखानि सर्वाणि सम्भूयेव मिलित्वेव चेतसि मदन्तःकरणे
परं भूमानं अतिशयाधिक्यं परिमितिविशेषवत्त्वं वा आतन्वते कुर्वन्ति । मनसि
महान् सुखोदयो जायते इत्यर्थः । यत्र यस्मिन् मालतीरूपे आलोकपथावतारिणि
दर्शनपथे वर्त्तमाने दृष्टे इति यावत् नेत्रोत्सवः तद्दर्शनजन्यनयनव्यापारः रतिमनु-
रागं प्रस्तौति आचरति । बालेन्दुकलोच्चयात् नवविधुकलासमूहादिवेत्युत्प्रेक्षा,
एतेन मालत्याः सर्वाङ्गीणमौज्ज्वल्यमुक्तम् । अवचितैः उच्चितैः सारैः सारांशैः
उत्पादितं विरचितमिव अनङ्गमङ्गलगृहं मदनमनोहरावासगृहमिव स्थित-
मित्यर्थः । यत् तस्याः प्रेयस्या मुखं तत् पश्येयं द्रक्ष्यामीत्याशंसा ।

मम हि सम्प्रति सातिशयप्रणिधानोपलब्धसम्भाविताभ्यासजन्मनः संस्कारस्यानवरतप्रबोधात्प्रतायमानस्तद्विसदृशप्रत्ययान्तरैः अतिरस्कृतप्रवाहः, प्रियतमास्मृतिप्रत्ययोत्पत्तिसन्तानः तन्मयमिव करोति अन्तर्वृत्तिसारूप्यतश्चैतन्यम् । * तथाहि ।

लीनेव प्रतिबिम्बितेव, लिखितेवोत्कीर्णरूपेव च,
प्रत्युप्तेव च, वज्रलेपघटितेवान्तर्निखातेव च ।
सा नश्चेतसि कीलितेव विशिखैश्चेतोभुवः पञ्चभि-
श्चिन्तासन्ततितन्तुजालनिबिडस्यूतेव लग्ना प्रिया ॥ (११)

[ नेपथ्ये कलकलः । ]

---

* मालतीमनुस्मृत्यातिशयमाह । मम हीति । मालतीनः प्रियाप्रत्यय-धाराप्रवाहः सन्तानः परिच्छिन्नमूढः स्मृतिरूप एव मम चैतन्यमात्मतत्त्वं तन्मयमिव करोति मालतीमयं करोतीत्यर्थः । कीदृशः । प्रतायमानो दीर्घीभवन् । अत्र हेतुः । संस्कारस्य भावनाया अतिशयितप्रबोधादुद्बोधात् । कीदृशस्य संस्कारस्य । सातिशयात्प्रणिधानात् स्फुटाकाराद्वा बकुलवीथ्यां पूर्वकालानुभवाद्वाभ्यासजन्मनः । प्रतायमानत्वमेवोपपादयति । तद्विसदृशैर्मालतीविलक्षणविषयैर्ज्ञानान्तरैः अतिरस्कृतप्रवृत्तिः । तथा चान्तरा विषयान्तरास्फुरणाच्च प्रवाहतिरस्कार इति भावः । स्मृत्यात्मतत्त्वस्य पुष्करपलाशवन्निर्लेपतया कथं मालतीमयत्वमत आह । अन्तरिति । अन्तःपदमिह बुद्धितत्त्वपरम् । तथा च बुद्धितत्त्वस्य या प्रवृत्तिः सकलवस्तुनि व्यापारः सा यत आत्मतत्त्वं भेदाग्रहात् प्रतिभासते तस्मात् । सारूप्यदर्शने ऽभेदीकृत्यात् । यद्वा । अन्तर्वृत्तिरिति भावप्रधानम् । तथा चान्तर्वृत्तित्वमन्तर्वर्तमानत्वं सारूप्यं सादृश्यमात्मबुद्धीत्वात् ।

(११) लीनेवेति । सा प्रिया मालती नोऽस्माकं चेतसि लीनेव प्रतिबिम्बितेव, लिखितेव मुद्रितेव उत्कीर्णरूपेव, उत्खचितेव, बहिरानीतेव, प्रत्युप्तेव खचितेव वज्रलेपेन घटितेव सम्पादितेव अन्तरन्तःकरणे निखातेव चेतोभुवः कामस्य पञ्चभिर्विशिखैर्बाणैः कीलितेव विद्धेव तथा चिन्तासन्ततिश्चिन्ताप्रवाहः, सैव तन्तुजालं तन्तुसमूह उपादानकारणमित्यर्थः तेन निबिडं घनं यथा भवति तथा स्यूतेव रचितेव ।

माध। अहो! सम्प्रति प्रगल्भमानकौणपनिकायमहती श्मशानवाटस्य रौद्रता। अस्मिन् हि

पर्यन्तप्रतिरोधिमेदुरवसश्यामं चिताज्योतिषा-
मौज्ज्वल्यं परभागतः प्रकटयत्याभोगभीमं तमः।
संसक्ताकुलकेलयः किलकिलाकोलाहलैः सम्मदा-
दुत्तालाः कटपूतनाप्रभृतयः सांराविणं कुर्वते॥ (११)

भवतु आघोषयामि तावत्। भो! भोः श्मशाननिकेतनाः कटपूतनाः!

अशस्त्रपूतमव्याजं पुरुषाङ्गोपकल्पितम्।
विक्रीयते महामांसं, गृह्यतां गृह्यतामिदम्॥ (१२)

[ पुनर्नेपथ्ये कलकलः। ]

माध। कथमाघोषणानन्तरमेव सर्वतः समुच्चलदुत्ताल-वेतालमुक्ततुमुलाव्यक्तकलकलाकुलः प्रचलित इवाविर्भवद्भूत-सङ्कटः श्मशानवाटः। आश्चर्यम्!

---

(११) पर्यन्तेति। पर्यन्तप्रतिरोधिभिः सीमावरकैः मेदुरवसैः मांसलवसैः श्यामं कृष्णं चिताज्योतिषां चितानलानामौज्ज्वल्यं कर्तृ परभागतः गुणोत्कर्षात् आभोगभीमं आभोगेन व्याप्त्या भीमं करालं तमः कर्म प्रकटयति, तथा किलकिला-कोलाहलैः (किलकिलेत्यनुकरणशब्दः) तद्रूपचीत्कारैः उत्ताला उत्कटा भीमा इत्यर्थः। संसक्ताकुलकेलयः संसक्तचपलक्रीडाः कटपूतनाप्रभृतयः श्मशान-वासिप्रभृतयः सांराविणं सम्यक् शब्दबाहुल्यं कुर्वते जनयन्ति।

(१२) अशस्त्रेति। अशस्त्रपूतं शस्त्रैरनाविद्धं अव्याजं सुन्दरं पुरुषाङ्गोप-कल्पितं पुरुषाङ्गेन सम्पादितं इदं महामांसं नृमांसमित्यर्थः। मालतीमन्तरेण शरीरधारणे फलाभावात् तुच्छत्वमिति भावः। हैमं कृते तथा कांसि न दीयते इत्यनुशासनादिति। विक्रीयते दीयते तद्गृह्यतां अभीप्सितं गृह्यतामित्यर्थः। इत्यादिषु पश्येत् बाहुल्यात् यदुपार्जितम्। अशस्त्रपूतं निर्व्याजमेतत् मांसं विदुर्बुधाः। इति परिभाषितमेव मांसं महामांसम्।

[ इति उत्तमुत्थापयन्ति । ]

माध ।

[ सहसोपसृत्य प्रकोष्ठे मालतीं निक्षिप्य । ]

दुरात्मन् ! एष प्रतिहतोऽसि कापालिकापसद * ! नन्वयं न भवसि ।

माल । [ सहसावलोक्य । ] परित्ताअदु मं महाणुभाओ माहवो ।

[ इति माधवमालिङ्गति । ]

माध । महाभागे ! न भेतव्यम् भेतव्यम् ।

मरणसमये त्यक्त्वा शङ्कां प्रतापनिरर्गल-
प्रकटितनिजस्नेहः सोऽयं सखा पुर एव ते ।
सुतनु ! विसृजोत्कम्पं सम्प्रत्यसाविह पाप्मनः
फलमनुभवत्युग्रं पापः प्रतीपविपाकिनः ॥ (२५)

अघो । आः क एष पापोऽस्माकमन्तराय: संवृत्तः ? ।

कपा । मालत्या एवायमस्याः स्नेहभूमिः कामन्दकीसुहृत्पुत्रो, महामांसस्य पणयिता, माधवो नाम ।

---

* कफोणेरधोभागो मणिबन्धपर्यन्तः प्रकोष्ठः । विक्षिप्य आकृष्य । सहहस्तेन बाहुमध्येऽवधारणम् । प्रतिहतो निराकृतः । अपसद ! निन्दित !

(२५) मरणेति । मरणसमये भर्ता जीवनखेतिभावः । त्वया प्रतापेन निरर्गलः अप्रतिहतवीर्यः तथा प्रकटितः निजः स्नेहः यं प्रति यस्य स च इति कर्मधारयः । स दृष्टपूर्वः अयं दृश्यमान इत्यर्थः । ते तव सखा बान्धवः पुर एव वर्तते इति शेषः । अतएव हे सुतनु ! शोभनाङ्गि ! उत्कम्पं भयं विसृज त्यज सम्प्रति असौ पापकारित्वात् पापः अघोरघण्टः इहात्र प्रतीपेन प्रतिकूलाचरणेन विपाकिनः परिपक्वस्य परिणामकठिनकर्मणः । पाप्मनः अशुभस्य उग्रं मरणरूपमुत्कटं फलमनुभवतु अनुभवत्वित्यर्थः ।

माध । [ मालतीम् । ] महाभागे ! किमेतत् ?

माल । [ चिरादालोक्य । ] महाभाअ ! अहं ण किम्पि जाणामि, एत्तिअं उण जाणामि, उवरिमलिन्दे पसुत्ता, इह-प्पबुद्धह्मि, तुम्हे उण कहिम् ? (घ) ।

माध । [ सलज्जं । ] त्वत्पाणिपङ्कजपरिग्रहपुण्यजन्मा
भूयासमित्यभिनिवेशकदर्थ्यमानः ।
भ्राम्यन्नृमांसपणनाय, परेतभूमा-
वाकर्ण्य, भीरु ! रुदितानि तवागतोऽस्मि ॥ (२६)

माल । [ स्वगतम् । ] हद्धी ! कधं मम कारणादो एव्वं एदे अप्पणिरवेक्खा परिक्कमन्दि (ङ) !

माध । अहो नु खलु भोः ! तदेतत्काकतालीयं नाम सम्प्रति हि ।

(घ) महाभाग ! अहं किमपि न जानामि, एतावदेव पुनर्जानामि, उपर्य्यलिन्दके प्रसुप्ता इह प्रबुद्धास्मि, यूयं पुनः क ? ।

(ङ) हा धिक् ! हा धिक् ! कथं मम कारणादेवमेते आत्मनिरपेक्षाः परिक्रामन्ति ।

(२६) त्वदिति । हे भीरु ! भाविनि ! तव पाणी एव पङ्कजे ताभ्यां यः परिग्रहः ग्रहणं सम्बन्धो वा । स एव पुण्यं तस्मात् जन्म यस्य तादृशः भूयासम् अहमिति शेषः । इत्यभिनिवेशेन आग्रहेण कदर्थ्यमानः पीड्यमानः भ्राम्यन् भ्रमन् पर्यटन् । नृमांसपणनाय नरमांसविक्रयाय परेतभूमौ श्मशाने तव रुदितान्याकर्ण्य श्रुत्वा आगतोऽस्मि ।

वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः,

पततु शिरस्यकाण्डयमदण्ड इवैष भुजः ॥ (१०)

अघोर । आः दुरात्मन् ! प्रहर, नन्वयं न भवसि ।

माल । पसीद णाह साहसिअ ! दारुणो क्खु अअं हदासो, परित्ताहि मं पडिणिवत्तीअदु इमादो अणत्थसंभादो * (क) ।

कपा । भगवन् ! अप्रमत्तो भूत्वा, दुरात्मानं व्यापादय † ।

माधवाघोरघण्टौ मालतीकपालकुण्डले प्रति ।

अयि भीरु !

धैर्य्यं निधेहि हृदये, हत एष पापः,

किं वा कदाचिदपि केनचिदन्वभावि ।

---

( क ) प्रसीद नाथ साहसिक, दारुणः खल्वयं हताशः, परित्रायस्व मां प्रतिनिवर्त्ततामस्मादनर्थसंभ्रमात् ।

---

(१०) पुनरपि दोषमुद्भाव्य दण्डं विकीर्षुराह । वपुषीत्यादि । हे पाप ! तव शिरसि एष भुजः आकस्मिकयमदण्ड इव पततु । आकस्मिकत्वेनाप्रतिक्रियत्वमुक्तम् । कीदृशस्य तव । तत्र वपुषि अतिसुकुमारे मालतीशरीरे वधाय शस्त्रम् उपक्षिपतः उत्तोलयतः । अत्र भुजपदेन बाहुव्यापारमात्रेणैव हन्तव्योऽसीति वीर्य्यातिशय उक्तः । यत् मालत्याः वपुः सुकुमारशिरीषपुष्पाघातैरपि ताम्यति म्लायति । कीदृशैः । भ्रमद्भ्रमरीविघातपरिहारसमर्थैः अपि । अत्रापि शृङ्गारवीरयोरवच्छेदः ।

* अत्र त्वज्जीवने मम जीवनमपि सफलम् । अन्यथा तु मरणमेव वरमिति भावः ।

† मालतीव कपालकुण्डलापि अनाथमाह । अनवहितेति । अवधानार्थम् प्रमत्त इति ।

(११) वीरोचितं मालतीमाश्वासयति । धैर्य्यमित्यादि । हे भीरु ! त्वं हृदये

मालती। हा ताद! हा भअवदि! (क) *।

माधवः। भवतु, बान्धवसमाजसुखितां मालतीं विधाय, तत्समक्षमेनं दुरात्मानं व्यापादयामि।

[मालतीमन्यतः कापालिकमन्यतः प्रेरयन् परिक्रामति †।]

माधवाघोरघण्टौ। [अन्योन्यमुद्दिश्य।] आः पाप!

कठोरास्थिग्रन्थिव्यतिकररणत्कारमुखरः,
खरस्नायुच्छेदक्षणविहितवेगव्युपशमः।
निरातङ्कः पङ्केष्विव पिशितपिण्डेषु विलस-
न्नसिर्गात्रं गात्रं सपदि लवशस्ते विकिरतु॥ (२२)

इति निष्क्रान्ताः सर्वे।

मालतीमाधवे पञ्चमोऽङ्कः।

---

(क) हा तात! हा भगवति!

---

पौरुषं पुरुषस्य व्यापारस्तेजो वा। पौरुषं पुरुषस्योक्तं भावे कर्मणि तेजसीति विश्वः।

* मालती तथावेगातिशयादाह। हा तात! हा भगवति! इति।

† मालतीरक्षार्थं कापालिको मया हत इति बान्धवा जानन्तु इत्याशयेन मालतीं च कातरां वीक्ष्याह भवत्विति। बान्धवेत्यादिना भाविकार्योपक्षेप उक्तः। अन्यतः कापालिकादन्यदिशं अभिमुखमिति यावत्।

(२२) तावन्योन्येन प्रकारव्यापारमाहतुः। कठोरेत्यादि। हे पाप! कर्दमेष्विव मांसपिण्डेषु निरातङ्को निर्भयः यथारुचि विचरन् सन्। तथा कठोराणामस्थिग्रन्थीनां व्यतिकरेण संघटनेन यो रणत्कारो व्यक्तध्वनिः तेन मुखरः सशब्दः। खरस्नायुच्छेदेषु कठिनस्नायुच्छेदेषु क्षणं मुहूर्तं विहितवेगव्युपशमः कृतवेगोपरमः मम असिः खड्गः गात्रं गात्रं प्रत्यङ्गं लवशः खण्डं खण्डं सपदि इदानीमेव विकिरतु विक्षिपतु।

---

यावत् सम्बन्धिनो न परापतन्ति, तावत् वत्सया मालत्या सह नगरदेवतागृहम् अविघ्नमङ्गलाय गन्तव्यम् इति आदिष्टमस्ति भगवतीनिदेशवर्त्तिनोऽमात्यदाराः। तथा गृहीतसविशेषमण्डनः प्रतीक्षतामानुयात्रिको जनः।

कपा। भवतु इतो मालतीविवाहपरिकर्मसत्वरप्रतीहारजनसङ्कुलादस्मात्प्रदेशादपक्रम्य, माधवापकारं प्रति अभिनिविष्टा भवामि। [इति निष्क्रान्ता। विष्कम्भकः।]

[ततः प्रविशति कलहंसकः।]

आणत्तोह्मि, अमरदेवदागब्भघरन्तिदेण मअरन्देण, आअमाहवेण, जधा आआहि दाव अत्ताहिमुहं पउत्ता मालदी ण वेति, ता जाव णं आअन्दइस्सं (क)।

ततः प्रविशतो माधवमकरन्दौ।

माध। मालत्याः प्रथमावलोकनदिनादारभ्य विस्तारितै-
भूयः क्षेपविचेष्टितैर्गहनतो नीतस्य कोटिं पराम्।
अद्यान्तः खलु सर्वथास्य मदनायासप्रबन्धस्य मे,
कल्याणं विदधातु वा भगवती नीतिर्विपर्य्येतु वा॥ (१)

---

(क) आज्ञप्तोऽस्मि, नगरदेवतागर्भगृहस्थितेन मकरन्देन आर्यमाधवेन, यथा आगच्छ तावत् आत्माभिमुखं प्रवृत्ता मालती न वेति, तद्यावदेनम् आनन्दयामि।

---

(१) मालत्या इति। अद्यास्य कल्याणं मालत्याः प्रथमावलोकनदिनात् बकुलवीथ्यां दर्शनादारभ्य विस्तारितैर्भूयः पुनरपि चित्तसन्देहजनकैः क्षेपविचेष्टितैः पराकाष्ठां कोटिम् उत्कर्षं नीतस्य प्रापितस्य मे मम अस्य मदनायासप्रबन्धस्य सर्वथा सर्वप्रकारेण अद्य अन्तोऽवसानं सम्भविष्यति। पूर्वसङ्कल्पितकार्यस्य दैवस्य वा अतिनिर्बन्धः। यथा नगरमध्ये भगवती कामन्दकी कल्याणं क्षेमं विद-

सविलास-कवलिद-तंबूल-बीडिआपूरिद-कवोल-मण्डलाभोअ-अवअर-क्खलिद-महुरमङ्गलगीद बहु-कोलाहलेहिं विविहर-अणालङ्कार-किरणावली-विडम्बिद-महिन्द-चाव खण्ड विच्छे-अविच्छुरिअ-णहत्थलेहिं, वारसुन्दरीकदम्बेहिं अज्झासिआ, कणन्त-कणअकिंकिणी-जाल-झणझणझङ्कारिणीओ करि-णीओ (ग) *।

माधवमकरन्दौ। सकौतुकं पश्यतः।

मक। रमणीयाः खलु अमात्यभूरिवसोर्विभूतयः। तथाहि।

प्रेङ्खद्भूरिमयूरमेचकचयैरभ्रंलिहाग्रच्छद-
च्छायासंवलितैर्विवर्त्तिभिरिव प्रान्तेषु पर्य्याहृताः।

---

(ग) नाथ! पश्य, पश्य एते तावदुत्पतितरुणहंसविभ्रमाभिरामचामर-समीरणोर्मिव्यतिकरितदोलायमानाङ्गनसरोवरनिरन्तरोद्गच्छत्पुण्डरीक-विभ्रमं वहन्तो, धवलातपत्रनिवहा दृश्यन्ते। एताश्च सविलासकवलिततांबूल-वीटिकापूरितकपोलमण्डलाभोग व्यतिकरस्खलित मधुरमङ्गलगीत--बहुकोलाहलैः विविधरत्नालङ्कार-किरणावलीविडम्बित--महेन्द्रचापविच्छेदविच्छुरितनभःस्थलैर्वार-सुन्दरीकदम्बैरध्यासिताः क्वणत्कनककिङ्किणीजालझणझणझङ्कारिण्यः करिण्यः।

---

* माधवीमात्मानं माधवमाह नाथेति। उप उत्पतितः उड्डीनः। विभ्रमो विलासो विशिष्टभ्रमणं वा। अभिरामः मनोहरः। उद्वेल्लन् कम्पमानः। बद-भिका पताका। तरङ्गितः तरङ्गयुक्तः। तेन उत्तालः चञ्चलमिव सरोवरः। तत्र उद्दण्डमुद्गच्छत् पुण्डरीकं पद्मं तस्य विभ्रमं विलासं वहन्तः धारयन्तः। आतपत्रं छत्रम्। [illegible] इति पाठे [illegible] प्रकाशतया [illegible]-पद्मेन चेतव्यम्। एताः करिण्य इत्यन्वयः। अध्यासितोऽध्यारूढाः। चर्वितं भक्षितम्। व्यतिकरः सङ्गः। स्खलितं भ्रंशितम्। मङ्गलगीतं मङ्गल-गानम्। विडम्बितं अनुकृतम्। विच्छेदः खण्डः। विच्छुरितं व्याप्तम्। झणझणायते अव्यक्तशब्दः।

(१) प्रेङ्खदित्यादि। [illegible]

विधाता भद्रं नो वितरतु मनोज्ञाय विधये,
विधेयासुर्देवाः परमरमणीयां परिणतिम्।
कृतार्थो भूयासं प्रियसुहृदपत्योपयमने,
प्रयत्नः सत्कोऽयं फलतु, शिवदायी च भवतु॥ (७)

माल। [स्वगतम्।] केण उण उवाएण सम्पदं मरणविग्घावहस्स अन्तरं सम्भावइस्सं? मरणंपि मन्दभाअहेआणं अहिमदंत्ति सुदुल्लहं होदि (क)।

लव। [स्वगतम्।] अतिक्कामिदा क्खु, पिअसही एदिणा अणुऊलविप्पलम्भेण * (ख)।

[प्रविश्य पेटकहस्ता प्रतीहारी।] अमच्चो भअवदीं विण्णवेदि, एदिणा णरिन्दाणुप्पेसिदेण विवाहणेवच्छेण देवदापुरदो अलङ्करिदव्वा मालदित्ति (ग)।

---

(क) केन पुनः उपायेन साम्प्रतं मरणविघ्नावहस्य अन्तरं सम्भावयिष्ये? मरणमपि मन्दभागधेयानामभिमतमिति सुदुर्लभं भवति।

(ख) अतिक्रामिता खलु प्रियसखी एतेन अनुकूलविप्रलम्भेन।

(ग) अमात्यो भगवतीं विज्ञापयति, एतेन नरेन्द्रानुप्रेषितेन विवाहनेपथ्येन देवतापुरतोऽलङ्करणीया मालती इति।

---

(७) विधातेति। विधाता स्रष्टा मनोज्ञाय प्रतिबन्धकशून्याय विधये विधानाय मङ्गलविधानाय नोऽस्माकं भद्रं वितरतु ददातु [illegible] चतुर्थी। इतोऽपि विवाहे नृपतिविरोधात् अनिष्टाशङ्कया आशीर्वादोऽयम्। देवाः परमरमणीयामतिशोभनां परिणतिं परिणामं विधेयासुः क्रियासुरित्यर्थः। प्रियसुहृदपत्यस्य माधवस्य उपयमने विवाहे अहं कृतार्थो कृतकार्या भूयासं अविच्छिन्नाशीरर्थः अभूततद्भावे च्विः। अयं मया क्रियमाणः [illegible] [illegible] प्रयत्नः फलतु शिवदायी च कल्याणकारकश्च भवतु।

* अनुकूलो माधवः तेन सह विप्रलम्भः विरहः तेन।

काम । युक्तमाह अमात्यः, माङ्गलिकमेतत् स्थानम् अतो दर्शय ।

प्रती । इदं दाव धवलपट्टंसुअजुअलं, इदं च उत्तरीअं रत्तपट्टंसुअं इमे अ सव्वङ्गिआ आहरणसञ्जोआ, अअं च मोत्तिआहारो, इदं चन्दणं, कुसुमापीडं अ (ञ) ।

काम । [ अपवार्य्य । ] रमणीयं हि वत्समकरन्दम् अवलोकयिष्यति मदयन्तिका । [प्रकाशं गृहीत्वा । ] भवतु ओम् इति उच्यताममात्यः ।

प्रतिहारी । तथा ।

इति निष्क्रान्ता ।

काम । वत्से लवङ्गिके ! प्रविश त्वम् अभ्यन्तरं वत्सया मालत्या सह ।

लव । अध भअवदी उण कहिम् ? (झ)

काम । अहमपि तावद्विविक्ते अलङ्करणरत्नानां प्राशस्त्यं प्रावतः परीक्षिष्ये । [ इति निष्क्रान्ता । ]

माल । [स्वगतम् । ] कधं, लवङ्गिआमेत्तपरिवारम्हि संवुत्ता । (ज)

लव । इदं देवदामन्दिरदुआरं ता पविसम्ह । (ट)

[ इति प्रविशतः । ]*

मक । वयस्य ! इतः स्तम्भापवारितशरीरौ तिष्ठावः ।

---

(ञ) इदं तावद्धवलपट्टांशुकयुगलम् इदमुत्तरीयं रक्तपट्टांशुकम्, इमे च सर्वाङ्गिका आभरणसंयोगाः, अयञ्च मौक्तिकाहारः, इदं चन्दनं कुसुमापीडश्च ।

(झ) अथ भगवती पुनः क ?

(ज) लवङ्गिकामात्रपरिवारास्मि संवृत्ता ।

(ट) इदं देवतामन्दिरद्वारं तत् प्रविशावः ।

[ तथा कुरुतः । ]

लव । सहि ! अअं अङ्गराओ, इमाओ कुसुममालाओ । (ट)

माल । तदो किं ? (ड)

लव । सहि ! इमस्सिं पाणिग्गहणमङ्गलारम्भे, कण्णआसम्पत्तिणिमित्तं देवदाओ पूजेहिस्सि, अम्बाए अणुप्पेसिदासि (ढ) ।

माल । किं दाणिं दारुणसमारम्भदेव्वदुव्विलासपरिणामदुःख-णिब्भर-माणसं पुणो पुणो वि मम्म-च्छेअ-दुःसहं मन्दभाइणीं कुणेसि (ण) ।

लव । अह किं वत्तुकामासि ? (त)

माल । जं दाणिं दुल्लहाहिणिवेसिमणोरहविसंवदन्तभाअधेओ * जणो मन्तेदि (थ) ।

मक । सखे ! श्रुतम् ।

माध । श्रुतमसन्तोषस्य हृदयस्य ।

माल । [लवङ्गिकां परिष्वज्य ।] ता, परमत्थबहिणि पिअ-

(ट) सखि ! अयमङ्गराग इमाः कुसुममालाः ।

(ड) ततः किम् ?

(ढ) सखि ! अस्मिन् पाणिग्रहणमङ्गलारम्भे, कन्यासम्पत्तिनिमित्तं देवताः पूजयेति, अम्बया अनुप्रेषितासि ।

(ण) किमिदानीं दारुणसमारम्भदैवदुर्विलासपरिणामदुःखनिर्भरमानसां पुनः पुनर्मर्मच्छेददुःसहां मन्दभागिनीं करोषि ।

(त) अथ किमसि वक्तुकामा ?

(थ) यदिदानीं दुर्लभाभिनिवेशिमनोरथविसंवदद्भागधेयो जनो मन्त्रयते ।

* दुर्लभे माधवे अभिनिवेशिनः मनोरथस्य विसंवदत् प्रतिकूलं भागधेयं भाग्यं यस्य सः । बहुव्रीहिः ।

माल । जहा तस्स जीविदप्पदाइणो जणस्स, पव्वसिदेत्ति मं सुणिअ सन्तप्पमाणस्स, तं तहाविहं सरीररअणं ण परिहीअदि, जधा अ परलोअगदं पि मं उद्दिसिअ सो जणो संस्सरणकधामेत्तपरिसेसं कालन्तरेवि लोअजत्तं ण सिढिलेदि तधा करेसि । एवं ज्जेव पिअसहीए प्पसादादो मालदी किदत्था भोदि (ध) ।

मक । हन्त ! अतिकरुणं वर्त्तते ।

माध । नैराश्यकातरधियो हरिणेक्षणायाः
श्रुत्वा निकामकरुणस्य मनोहरस्य ।
वाक्यस्य मोहपरिदेवितमुद्गिरामि,
चिन्ताविषादविपदस्य महोत्सवस्य ॥ (८)

लव । अज्ज ! पडिहदं दाणिं दे अमङ्गलं ण अदोवि अधिअदरं सुणिस्सम् । (न)

---

(ध) यथा तस्य जीवितप्रदायिनो जनस्य प्रव्रजितेति मां श्रुत्वा सन्तप्यमानस्य, तत्तथाविधं शरीररत्नं न परिहीयते, यथा च मां परलोकगतामप्युद्दिश्य स जनः संस्मरणकथामात्रपरिशेषां कालान्तरेऽपि लोकयात्रां न शिथिलयति, तथा करिष्यसि, एवमेव प्रियसखीप्रसादात् मालती कृतार्था भवति ।

(न) अपि प्रतिहतम् इदानीं ते;मङ्गलम् । नातोऽप्यधिकतरं श्रोष्यामि ।

---

निराशाकुलेव । इन्द्रियमोहेऽपि विषयग्रहाभावात् । आनन्दं प्राप्तो हर्षं तत्र मोहे प्रतिष्ठितम् । इति श्रुतेरानन्दमयता मोहे । यद्वा । आत्मपदार्थो ज्ञानानन्दितपदार्थो मोहशब्देन । पीयूषशब्दार्थे प्रियपदम् । यद्वा मोह-पीयूषमर्पितमिव श्रुतिऽपि चेति चर्चितः ।

(८) नैराश्येति । नैराश्येन दुराशया कातरा आकुला धीः अन्तःकरणं यस्यास्तस्याः हरिणेक्षणाया मालत्याः निकामकरुणस्य दयापरिपूर्णस्य मनोहरस्य वाक्यस्य मोहपरिदेवितं वाक्यस्य मोहजनितविलापं श्रुत्वा चिन्तया विषादेन च या विपद् तां महोत्सवमानन्दम् उद्गिरामि वमि ।

माल। सहि! पिअं क्खु तुह्माणं मालदीजीविदं, ण उण मालदी। (प)

लव। किं एव्वं भणिदे भोदि। (फ)

माल। [आत्मानं निर्दिश्य।] जेण अम्बजणपच्चामाणिबन्धणेहिं वअणसंविहाणेहिं जीआविअ इमं ज्जेव्व महावीभच्छारम्भं अणुभाविदह्मि, सम्पदं उण मम मणोरहो एसो ज्जेव्व जं तस्स देवस्स परोक्खगुणकित्तणेण अणवरद्धं अत्ताणं परिच्चइस्संत्ति, ता, इमस्सिं पओअणे पिअसही मे अपरिपन्थिणी होदु (ब)।

इति पादयोः पतति।

मक। सैषा सीमा स्नेहस्य।

लवङ्गिका। माधवं संज्ञया समाह्वयति।

मक। वयस्य! उपसृत्य लवङ्गिकायाः स्थाने तिष्ठ।

माध। वयस्य! परवानस्मि साध्वसेन।

मक। इयमिव नेदीयसां प्रकृतिरभ्युदयानाम्।

माधवः। धीरं लवङ्गिकास्थाने तिष्ठति।

माल। सहि! करेहि अणुऊलदाए पसादं (भ)।

---

(प) सखि! प्रियं खलु युष्माकं मालतीजीवितं न पुनर्मालती।

(फ) किमेवं भणिते भवति।

(ब) येन अम्बजनप्रत्यामानिबन्धनैर्वचनसंविधानैर्जीवयित्वा इममेव महावीभत्सारम्भमनुभावितास्मि। साम्प्रतं पुनर्मम मनोरथ एष एव यत्, तस्य देवस्य परोक्षगुणकीर्त्तनेन अनपराद्धमात्मानं परित्यक्ष्यामीति। तदस्मिन् प्रयोजने प्रियसखी मे अपरिपन्थिनी भवतु।

(भ) सखि! कुरु अनुकूलतया प्रसादम्।

युवा सोऽयं, प्रेयानिह सुवदने! मुञ्च जडताम्
विधातुर्वैदग्ध्यं विलसतु, सकामोऽस्तु मदनः॥ (१५)

लव। भअवदि! कसणचउद्दसीरअणीमसाणसञ्चरण-णिव्वत्तिदविसमव्ववसाअणिट्ठाविदचण्डपासण्डपअण्डदोद्दण्ड-साहसो साहसिओ क्खु एसो, जदो मे पिअसही उक्कम्पिदा (ग)।

मक। [स्वगतम्।] साधु लवङ्गिके! साधु, अवसरे खलु अनुरागोपकारयोर्गरीयसो: उपन्यासः।

माल। हा ताद! हा अम्ब! (घ)

काम। वत्स माधव!।

माध। आज्ञापय।

काम। इयम् अग्रेसरामन्त्रमस्तकोत्तंसपरागरञ्जितचर-णाङ्गुलेः अमात्यभूरिवसोः एकम् अपत्यरत्नं मालती, भगवता सहृदयसंयोगरसिकेन वेधसा, मन्मथेन, मया च, तुभ्यं प्रदीयते। [इति रोदिति।]

मक। फलितं हि मनोरथैः भगवतीपादप्रसादेन।

---

(ग) भगवति! कृष्णचतुर्दशीरजनीश्मशानसञ्चरणनिर्वर्तितविषमव्यवसाय निष्ठापितचण्डपाषण्डप्रचण्डदोर्दण्डसाहसः साहसिकः खलु एषः, यतो मे प्रियसखी उत्कम्पिता। विषमव्यवसायः महामांसविक्रयः। निष्ठापितः निहतः। पाषण्डः अघोरघण्टः। साहसिकादि भयं भवति यतः मे सखी मालती उत्कम्पिता।

(घ) हा तात! हा अम्ब!

---

विलसत्‌ अनन्यपरता एकायत्तम्। यस्य त्वयि, तव च यस्य तनुत्वादिदर्शनविषादः अभवत् भवति प्रेयान् प्रियतमः सोऽयं युवा माधवः इह अत्र विद्यते इति शेषः। हे सुवदने! सुमुखि! जडतां दैन्यजाड्यं मुञ्च त्यज, विधातुर्वैदग्ध्यं चातुर्यं विलसतु मदनः कामः सकामः सफलमनोरथोऽस्तु।

माध । तत्किमिति वाष्पायितं भगवत्या ? ।

काम ।

[ चीवराञ्चलेन नेत्रे परिमृज्य । ]

विज्ञापयामि कल्याणिनम् ।

माध । ननु आज्ञापय ।

काम । परिणतिरमणीयाः प्रीतयस्त्वद्विधानाम्
अहमपि तव मान्या हेतुभिस्तैश्च तैश्च ।
तदिह सुवदनायां तात ! मत्तः परस्तात्
परिचयकरुणायां सर्वथा मा विरंसीः ॥ (१६)

इति पादयोः पतितुमिच्छति ।

माध । [निवारयन् । ] अहो ! वात्सल्यादतिक्रामति प्रसङ्गः ।

श्लाघ्यान्वयेति, नयनोत्सवकारिणीति,
निर्व्यूढसौहृदभरेति गुणोज्ज्वलेति ।
एकैकमेव हि वशीकरणं गरीयो
युष्माकमेवमियमित्यथ किं ब्रवीमि ? ॥ (१७)

---

(१६) परीति । तात ! वत्स ! पुत्रे पितरि पूज्ये च तातशब्दः प्रयुज्यते इति शब्दार्णवः । त्वद्विधानां बुद्धिविद्यादिसम्पन्नानामित्यर्थः प्रीतयः परिणतिरमणीयाः परिणामसुखदायिका इत्यर्थः । तैस्तैः रमणीयप्रीतिप्रतिपादकैः इति यावत् हेतुभिर्विशेषैः अहमपि तव मान्या माननीया संवृत्तास्मीति भावः । तत् तस्मात् मत्तः परस्तात् मयि गतायां सत्यामित्यर्थः । परिचयकरुणायां परिचयमात्रेणैव दयापात्रमिव सुवदनायां मालत्यां सर्वथा मा विरंसीः विरतो मा भव । सदैवानया सह विश्रम्भकथालापेन सुखेन कालं नयेत्यर्थः ।

(१७) श्लाघ्येति । श्लाघ्यान्वया उच्चकुलोद्भवेति नयनोत्सवकारिणी नेत्रानन्दजनिकेति, निर्व्यूढसौहृदभरा उपचितप्रेमनिकरेति गुणोज्ज्वला शीलादिमती इति इयं मालती भवति इत्यर्थः । एतादृशगुणानां मध्ये एकैकमेव हि

काम। वत्स माधव!

माध। आज्ञापय।

काम। वत्से मालति!

लव। आणवेदु भअवदी। (ख)

काम। प्रेयो मित्रं, बन्धुता वा समग्रा,
सर्वे कामाः शेवधिर्जीवितञ्च।
स्त्रीणां भर्त्ता, धर्मदाराश्च पुंसाम्
इत्यन्योन्यं वत्सयोर्ज्ञातमस्तु॥ (१८)

मक। अथ किं।

लव। भअवदि! जधा तुम्हे आणवेध। (क)

काम। वत्स मकरन्द! त्वमनेनैव वैवाहिकेन मालतीनेपथ्येन प्रसाधितः, परिणायय आत्मानम्।

[ इति पेटाकमर्पयति। ]

---

(ख) आज्ञापयतु भगवती।

(क) भगवति! यथा त्वम् आज्ञापयसि।

---

एकैकश एव गरीयो गुरुतरं वशीकरणं मन्त्रौषधादिना वश्यतानयनोपायः यथाकथम् इयमेव मालती प्रियतमा इति प्रेयः इति ईतीव किं ब्रवीमि अतः परं न मे बहु वक्तव्यमस्ति।

(१८) प्रेय इत्यादि। वत्सयोर्मालतीमाधवयोरन्योन्यमितदिदितमस्तु यत् स्त्रीणां भर्त्ता प्रेयः प्रियतमं वस्तु मित्रं सुहृत् समग्रा बन्धुता बन्धुवर्गः सर्वे कामाः ईप्सिताः शेवधिर्निधिर्जीवितं च। पुरुषाणां धर्मदाराः पाणिगृहीताः प्रेय इत्यादि। अनुक्तमत्र वाक्यमनुषङ्गाद्योजनीयमिति समुच्चे तत्। निधिर्ना शेवधिरित्यमरः। अनेन काव्यलिङ्गालङ्कारो दर्शितः। स चानुरागमूलत्वाच्छृङ्गारः। वक्ताय। चतुरावाक्यकलेन काव्यर्थः श्रेयसां वसः। इति।

मक। यदाज्ञापयति भगवती, यावदितश्चित्रजवनिकाभ्यन्तराय नेपथ्यं धारयामि। [तथा करोति।]

माध। भगवति! सुलभवञ्चनार्थम् अतिसङ्कटम् इदं वयस्यस्य।

काम। वत्स! कस्त्वमस्यां चिन्तायाम्?।

माध। एवं भगवती एव जानाति।

[प्रविश्य मकरन्दः। विहसन्।] वयस्य! मालती अस्मि।

[सर्वे सकौतुकं पश्यन्ति।]

माध। [मकरन्दं परिष्वज्य, सोपहासम्।] भगवति! कृतपुण्य एव नन्दनो, यः प्रियामीदृशीं मनसा मुहूर्त्तमपि कामयिष्यते।

काम। वत्सौ मालतीमाधवौ! इतो निर्गत्य, दृष्टगहनेन गम्यताम् उद्वाहमङ्गलार्थम् अस्मद्विहारिकायाः पश्चादुद्यानवाटः सुविहितं च तत्रैव वैवाहिकं द्रव्यजातम् अवलोकितया। भूयश्च

गाढोत्कण्ठकठोरकेरलवधूगण्डावपाण्डुच्छदैः
ताम्बूलीपटलैः पिनद्धफलिनव्यानम्रपूगद्रुमाः।

---

(१८) गाढेत्यादि। तद्दुर्गा भाषा उद्यानवाटिकायाः प्रदेशा वो युष्माकं प्रवः शृङ्गारादिकं विधास्यन्ति शृङ्गारस्योपवनविहरणजन्यत्वात्। यदाह। उपवनगमनविहारैः शृङ्गाररसः समुद्भवति। एषः प्रदेशाः कीदृशाः। ताम्बूली पर्णलता तासां पटलैः समूहैः पिनद्धा वेष्टिताः फलिनः फलयुक्ता अतएव व्यानम्राः आनताः पूगद्रुमाः क्रमुकवृक्षा येषु ते। कीदृशैः ताम्बूली पटलैः। गाढा उत्कण्ठा यस्याः सा च कठोरा स्तनीवीनयना: केरलदेशवधूजना: तस्याः कपोलवदवपाण्डुरौवद्धूरच्छदः पत्रं येषां तैः। रतिहर्म्यादि इत्या प्रतिपत्राग्रिका गुवाका च। पनिषतकर्षितपीडा या विर्भा वा स्तनीवा तु॥

कालीकीफलमांसलगन्धमुग्धविकिरव्याहारिणस्ते भुवो

भागाः प्रेङ्खितमातुलुङ्गवृतयः, प्रीतिं विधास्यन्ति वाम् ॥१८॥

गत्वा च तत्रैव मकरन्दमदयन्तिकागमनं यावत् स्थातव्यम् ।

माध । [ सहर्षम् । ] कल्याणान्तरावर्तमाशिः कल्याणसंपदुपविष्टान् भवति ।

कल । दिट्ठिआ एदम्पि णो भविस्सदि । (ख)

माध । कथं सन्देह एवात्रभवतः ।

लव । सुदं पिअसहीए । (ग)

काम । वत्स मकरन्द ! वत्से लवङ्गिके ! इत इतः प्रतिष्ठामहे ।

माल । सहि ! तुए वि गन्तव्वं ? (घ)

---

(ख) दिष्ट्या एतदपि नः भविष्यति ।

(ग) श्रुतं प्रियसख्या ।

(घ) सखि ! त्वयापि गन्तव्यम् ।

---

इति भरतः । अत एव तत्कण्ठाभिधानम् । कैरवदेवबलेन गौरत्वमुक्तम् । अतः पीतिमसम्बन्धात्कृत ईषत्पाण्डुरत्वम् । यदाह । सितपीतसमायोगादीषत्पाण्डुरिति स्मृतः । पिनद्धेति पाठे आमुक्तिरचितापि निबद्धापि रूपम् । कालिन्दीति यवकचोभ्यामितनञ्जनवर्णैः । तथा कालीकीफलस्य अन्यथा मांसलेन मुग्धाः हीता ये विकिराः पक्षिविशेषास्तेषां व्याहारं उत्किरन्ते । कालीकी बदरी बीजीभवेकार्थः । भूमिं नखैर्विलिख्य ये चरन्ति ते विकिराः । नखैर्भूमि-विलिखितविविधविकिरपदवत्त इत्यमरः । अदी अन्धिः । व्याहारं उत्किरणन्ति-मित्यमरः । तथा प्रेङ्खिता दोलिताः चलिता मातुलुङ्गबहिर्वेष्टनं येषु ते । तथा चैवं विचरणीयवनबनधीन सर्वधनीरसविशिष्टे भविष्यतीति भावः । मातु-लुङ्गो बीजपूरकः । दुचकी मातुलुङ्ग इत्यमरः ।

लव । [विहस्य ।] संपदं क्खु वअं एत्थ तुवरामो । (ड)

इति निष्क्रान्ताः कामन्दकीबुद्धरक्षितामकरन्दाः ।

माध । अयमहमिदानीं

आमूलकण्टकितकोमलबाहुनाल-
मार्द्राङ्गुलीदलमनङ्गनिदाघतप्तः ।
अस्याः करेण करमाकलयामि कान्त-
मारक्तपङ्कजमिव द्विरदः सरस्याः ॥ (२०)

इति निष्क्रान्ताः सर्वे । मालतीमाधवे मालतीवीथिकाविवाहो नाम षष्ठोऽङ्कः ।

---

(ड) साम्प्रतं खलु वयमत्र त्वरामहे ।

---

(२०) आमूलेति । अनङ्ग एव निदाघः ग्रीष्मः तेन तप्तः द्विरदो हस्ती इव आमूलं मूलपर्यन्तं कण्टकितम् सञ्जातकण्टकम् रोमाञ्चितञ्च कोमलबाहुरेव नालं दण्डो यस्य तं, आर्द्राः स्निग्धा अङ्गुलय एव दलानि यस्य तं अस्या मालत्याः कान्तं कमनीयं करं सरस्याः सरोवरस्य आरक्तपङ्कजं द्विरद इव अहं करेण हस्तेन च आकलयामि गृह्णामीति यावत् । अत्र सावयवरूपकाद्युपमाक्षेपादिसंसर्गः ।

बुद्ध। [सास्रम्।] घरे घरे पुरिसा कण्णआओ समुव्वहन्ति ण क्खु को वि लज्जापराधीणं अणवरद्धं मुद्धसउमारसहावं कुलकुमारीअणं पहवामि त्ति वाआमलेण पक्खालेदि। एदे क्खु दे हिअअसल्लणिक्खेवा आमरणं सुमरिज्जन्तदूमणा पदिघरणिवासवेरग्गकारिणो महापरिभवा जाणं किदे इत्थिआणं अम्मलाहं जुगुच्छन्ति बान्धवा (ध)। (१२)

मद। बुद्धरक्खिदे! अदिदुम्मणाअमाणा पिअसही लवङ्गिआ। महन्तो को वि मे भादुणा बाआवराधो से किदो (न)। (१३)

बुद्ध। अध इं। सुदं अज्ज त्ति जधा मम ण तुए संपदं कोमारबन्धईए पओअणं त्ति (प)।

मद। [कर्णौ पिधाय।] अहो! अदिक्कमो। अहो! पमादो। सहि लवङ्गिए! असमत्थम्हि दे मुहं पि संपदं

---

(ध) गृहे गृहे पुरुषाः कुलकन्यकाः समुद्वहन्ति न खलु कोऽपि लज्जापराधीनमनपराद्धं मुग्धसुकुमारस्वभावं कुलकुमारीजनं प्रभवामीति वाचामलेन प्रक्षालयति। एते खलु ते हृदयशल्यनिक्षेपा आमरणं संस्मर्यमाणदुःखदाः पतिगृहनिवासवैराग्यकारिणो महापरिभवा येषां कृते स्त्रीणां जन्मलाभं जुगुप्सन्ते बान्धवाः।

(न) बुद्धरक्षिते! अतिदुर्मनायमाना प्रियसखी लवङ्गिका। महान् कोऽपि मे भ्रात्रा वागपराधोऽस्याः कृतः।

(प) अथ किम्। श्रुतमस्माभिर्यथा मम न त्वया साम्प्रतं कौमारबन्धक्या प्रयोजनमिति।

---

(१२) अत्र निर्वेद आरोपणम्। जुगुप्सन्ते निन्दन्ति। दुःशीला कन्या मा जायतामिति भावः।

(१३) कथमन्यथोद्विग्नेयमिति भावः।

लव। किं दाणिं अवरं (म)। (२०)

मद। जं मम तस्स जीविदप्पदाइणो महाणुभावस्स चेअणापडिलम्भपिअणिवेदिआए मालदीए भअवदीविअप्प-अणोवण्णासबोधिदेण हिअअं जीविदं अ माहवेण पारितोसिअत्तणेण समंगाहसाहसे णिउत्तं। अह अ लवङ्गिए तहिं तुए जेव्व भणिदं पडिच्छिदो क्खु णो पिअसहीए अअं पसादो त्ति (य)। (२१)

लव। कदमो उण महाभाओ त्ति विसुमरिदं मए (र)।

मद। सहि सुमर सुमर जेण तस्सिं दिअसे विअडदुद्दमा-उद्दावदंसकालगोचरं गदा असरणा तक्कालसंणिहिदेण जीवि-

---

(म) किमिदानीमपरम्।

(य) यत् खलु मम तस्य जीवितप्रदायिनो महानुभावस्य चेतनाप्रतिलम्भ-प्रियनिवेदिकाया मालत्या भगवतीविकल्पवचनोपन्यासबोधितेन हृदयं जीवितं च माधवेन पारितोषिकत्वेन समंगाहसाहसे नियुक्तम्। अथ च लवङ्गिके तत्र त्वयैव भणितं प्रतीष्टः खलु नः प्रियसख्या अयं प्रसाद इति।

(र) कतमः पुनर्महाभाग इति विस्मृतं मया।

---

यः स विलास इति सूतः। पुरुषे यथा। मन्दसञ्चारिणी दृष्टिर्गतिश्च वृष-भाविता। स्मितपूर्वकमालापो विलासः कथ्यते बुधैः। किं न त्वया निरूपिता सेनापत्युत्र इत्यर्थः। चावेगोऽप्रासिदुःखम्। चञ्चारितं सुतरम्। उद्वर्त्तमान-मुत्पतत्। चापेगोऽभिलाषातिशयः। मदाय। चापलमपि भवेत् पुंसामिच्छा-मात्रात्मिकप्रयात्।

(२०) किमिदानीमपरम्। त्वया श्रुतमिति शेषः।

(२१) अत्र चेतनाप्रतिलम्भेन प्रियम्। पारितोषिकं वस्त्राद्यलङ्कारादि-लोके दर्शितम्। नियुक्तं दत्तम्। तदिच्छानुरागं विना नोपपद्यत इति भावः। अत्यन्तप्रीतिप्रकर्षेण सङ्कतापन्नभावमाह। त्वं तत्र इति भणितमिति पूर्वेण स-म्बन्धः। प्रतीष्टमिति। स्मरणापि तत्कथनादार्य्यं चत्र इति भावः।

मद। सहि! किं पुणो वि पणअभङ्गेण किदावराहो अअं जणो जेण एव्वं मन्तेसि। पिअसहि! तुमं लवङ्गिआए सह सम्पदं मे हिअअं (त)। (३७)

बुद्ध। जइ दे कधं वि मअरन्दो पुणो वि दंसणपहं ओदरदि तदो किं तुए कादव्वं (थ)। (३८)

मद। एक्कावअवणीसङ्कलग्गणिच्चले चिरं लोअणे णिव्वावइस्सं (द)। (३९)

बुद्ध। अध सो वि मम्महबलक्कारिदो कन्दप्पजणणिं तुमं रुक्खिणिं विअ पुरिसोत्तमो सअंगाहसहधम्मआरिणिं करेदि तदो का पडिवत्ती? (ध)। (४०)

---

(त) सखि किं पुनरपि प्रणयभङ्गेन कृतापराधोऽयं जनो येनैवं मन्त्रयसि। प्रियसखि! त्वं लवङ्गिकया सह साम्प्रतं मे हृदयम्।

(थ) यदि ते कथमपि मकरन्दः पुनरपि दर्शनपथमवतरति ततः किं त्वया कर्त्तव्यम्।

(द) एकैकावयवनिःसङ्कलग्ननिश्चले चिरं लोचने निर्वापयिष्यामि।

(ध) अथ सोऽपि मन्मथबलात्कारितः कन्दर्पजननीं त्वां रुक्मिणीमिव पुरुषोत्तमः स्वयंग्राहसहधर्मचारिणीं करोति ततः का प्रतिपत्तिः?।

---

(३७) अत्र कृतापराध इत्यत्र विरचनानुमतिः।

(३८) अत्राज्ञमनर्थमेव त्वया कार्यमिति भावः।

(३९) अत्र तद्दर्शनाभावतश्चैकनीतया भविष्यामीति भावः। निःसङ्गः सर्वाङ्गव्यापी।

(४०) बलात्कारिदो मण्डे। बलात्कारितो बलात्कारेण प्रवर्तितः। रुक्मिणी कामजाता प्रद्युम्नजातत्वात्। पक्षे कामापत्याकारिणीम्। पुरुषो-

